

शुक.
परीक्षि.
अथश्रीमद्भागवतनवमस्कंधचूर्णिकाप्रारंभः
सूर्यवं.
सोम.

श्रीगणेशायनमः अथनवमस्कंधार्थोलिख्यते राजोवाच हेशुकत्वयाउक्तानिसर्वमन्वंतराणिश्रुतानि तेषुहरेः
कृतानिवीर्याणिचश्रुतानि योऽसौसत्यव्रतोनामराजर्षिः सःगतकल्पांतेविवस्वतः पुत्रः मनुः आसीत् इतिश्रुतम् हेब्रह्मन्
तस्यइक्ष्वाकुप्रमुखपुत्राणांवंशंवंश्यानुचरितानिचवद किंच येभूताः येभाव्याः येअद्यतनाः तेषांपुण्यकीर्तीनांविक्रमान्
वद श्रीशुकउवाच हेराजन्मानवोवंशः प्राचुर्येणश्रूयताम् कल्पांतेनारायणः एकएवासीत् तस्यनाभिकमलात्ब्र
ह्मा तस्यमनसः मरीचिः तस्यकश्यपः तस्मात् अदित्यांविवस्वान् तस्मात्संज्ञायांश्राद्धदेवः मनुः तस्मात् श्रद्धायांपुत्राः१०इक्ष्वा
कुः१ नृगः२ शर्यातिः३दिष्टः४ धृष्टः५ करूषकः६ नरिष्यंतः७पृषध्रः८ नभगः९ कविः१० एषांपुत्राणांउत्पत्तेः प्राक् अप्रजस्यम-
नोः प्रजार्थंवसिष्ठःमित्रावरुणयोः इष्टिंचकार तदाश्रद्धानाममनोः पत्नीहोतारंप्रतिममकन्याभवत्विति अयाचत तदाहोतुर्म
त्रव्यभिचारेणइलानामकन्याअभवत् तदामनुःकन्यांदृष्ट्वाउवाच हेवसिष्ठकिमिदंविपरीतंजातम् ततोवसिष्ठः होतुर्व्यति
क्रमंज्ञात्वातंउवाच हेमनोहोतुर्व्यभिचारतः इदंसंकल्पवैषम्यंजातंतथापितेसुप्रजास्त्वंसाधयिष्ये इत्युक्त्वाहरिंअस्तौत् तदाप्र-
सन्नःहरिःइलामेवसुद्युम्नंअकरोत् सःसुद्युम्नःएकदाअश्वंआरुह्यअमात्यादिभिःसहमृगयांगतःसन् मेरोः अधस्तात्वनं-
विवेश यत्रउमयासहशिवःरममाणःआस्ते तस्मिन् प्रविष्टेसतिआत्मानंस्त्रियंअश्वंचवडवांअपश्यत् तदनुगाःसर्वेआत्मलिं
गविपर्ययंदृष्ट्वामिथोवीक्षंतःसंतःखिन्नाःअभूवन् राजोवाच कथमेवंगुणोदेशःकेनवाकृतःतद्वद श्रीशुकउवा॰
एकदाऋषयःगिरिशंद्रष्टुंतत्रअगमन् तान्दृष्ट्वाविवस्त्रादेवीव्रीडितासती भर्तुरंकात्उत्थायवासःपर्यधात् ऋषयोऽ
पिरममाणयोस्तयोः प्रसंगंदृष्ट्वानिवृत्ताःसंतः नरनारायणाश्रमंप्रययुः तदाशिवःप्रियायाःप्रियकाम्ययाइदंआह एतत्स्था

नंयः प्रविशेत् सः योषित् भवेत् ततऊर्ध्वं पुरुषाः तद्वनंवर्जयंति साइलाकन्यावनात् वनंचचार ततोबुधः स्वाश्रमसमीपेचरंतीं
तांवीक्ष्यचकमे साऽपितंचकमे तस्यांबुधः पुरूरवसंपुत्रंजनयामास एवंस्त्रीत्वंप्राप्तः सुद्युम्नः वसिष्ठंसस्मार ततोवसिष्ठः त-
स्यतांअवस्थांदृष्ट्वानस्य पुंस्त्वं इच्छन् शंकरंउपधावत सभगवान् वसिष्ठायतुष्टः सन् स्वांवांचंऋतांकुर्वन् तत्प्रियंच कुर्वन् इदं-
आह अयंमासंपुमान् मासंस्त्रीभविता इत्थंव्यवस्थयागुरोः कृपयासुद्युम्नः भूमिंपालयामास तंप्रजाःनाभ्यनंदन् तस्यउत्क-
लः१ गयः२ विमलः३ एतेत्रयः पुत्राः दक्षिणपथगोप्तारः बभूवुः ततः प्रतिष्ठानपतिः सुद्युम्नः पुरूरवसेपुत्राय गांउत्सृज्य वनंगतः
४२ इतिनवमेप्रथमः १ श्रीशुकउवाच एवंसुद्युम्नेसति वैवस्वतोमनुः पुत्रकामः सन् यमुनायांशतंसमाः तपः तेपे त
तोमनुः अपत्यार्थंहरिंईजे ततः इक्ष्वाकुप्रमुखान् पूर्वोक्तदशपुत्रान्लेभे तत्र पृषध्रस्तु ८ गुरुणा गोपालः कृतः सः गाः पालयामा
स एकदानिशि वर्षतिसति गोष्ठंव्याघ्रः प्राविशत् भीताः गावः व्रजेबभ्रमुः व्याघ्रः एकांजग्राह साभयातुराचुक्रोश तदापृष-
ध्रः खड्गंआदायशार्दूल शंकयानज्ञात्वा बभ्रोः शिरः अहरत् व्याघ्रोऽपिछिन्नकर्णः भीतः सन् रक्तंपथिउत्सृजन् निश्चक्राम पृ
षध्रः व्याघ्रंहतंमन्यमानः व्युष्टायांनिशिस्वहतांबभ्रुंदृष्ट्वादुःखितः जातः तदासः गुरुः पृषध्रंशशाप अनेनकर्मणात्वंशूद्रोभवइ
ति एवंगुरुणाशप्तः सः ऊर्ध्वरेताः मुनिप्रियव्रतंदधार सः वासुदेवेमनः समाधायजडांधबधिराकृतिः सन् कालेनदावाग्निदग्धः
ब्रह्मप्राप ततःकनिष्ठः कविः १० विषयेषुनिरिच्छः सन् राज्यंत्यक्त्वावनेगत्वाचित्तेपुरुषंनिवेश्य परंगतः अथकरूषात् ६ करूषाः क्ष
त्रियाः तेउत्तरदेशपालकाः आसन् ततः धृष्टात् ५ धार्ष्टंक्षत्रंअभूत् तत् ब्राह्मणत्वंगतं ततः नृगस्य २ सुमतिः ततः भूतज्योतिः त-
तः वसुः ततः प्रतीकः ततः ओघवान् ओघवतीकन्याचतांसुदर्शनः उवाह ओघवतः पुत्रः ओघवान् ततोनरिष्यंतात् ७ चित्रसेनः

ओ·१० पृषध्रम्, ओ·९ श्राद्धदेव, ओ·६ गीः

 

ततोदक्षः तस्यमीढ्वान् त॰कूर्चः त॰ इंद्रसेनः त॰ वीतिहोत्रः त॰ सत्यश्रवाः त॰ उरुश्रवाः त॰ देवदत्तः त॰ अग्निवेश्यः नामस्वयंअग्निः
सुतोभूत् सएवकानीनः जातूकर्ण्यः इति तस्मात् ब्रह्मकुलंजातंदिष्टान् ५ नाभागः सचवैश्यतांगतः त॰ भलंदनः त॰ वत्सप्रीतिः
त॰प्रांशुः त॰ प्रमतिः त॰ खनित्रः त॰ चाक्षुषः त॰ विविंशतिः ततः रंभः त॰ खनिनेत्रः तस्यकरंधमः त॰ आविक्षित् त॰मरुत्तः चक्र
वर्त्तीअभूत् यस्ययज्ञइवअन्यस्ययज्ञः नजातः तस्ययज्ञेसर्वंहिरण्मयंआसीत् त॰ दमः त॰ राज्यवर्धनः त॰ सुधृतिः त॰ नरः
त॰ केवलः त॰ बंधुमान् त॰वेगवान् त॰ बंधुः त॰ तृणबिंदुः तंअलंबुषाअप्सराभेजे यस्यांतृणबिंदोः पुत्राः ३ विशालः शून्यबंधुः
धूम्रकेतुरिति इडविडाकन्याचजाता तस्यांविश्रवाकुबेरंजनयामास तृणबिंदुसुतेनविशालेनवैशालीपुरीनिर्मिता विशाला
त् हेमचंद्रः त॰ धूम्राक्षः त॰ संयमः तस्यकृशाश्वदेवजौपुत्रौ २ कृशाश्वात् सोमदत्तः सः अश्वमेधैः पुरुषंइष्ट्वा अग्र्यांगतिंआप
सोमदत्तात् सुमतिः त॰ जनमेजयः एतेवैशालभूपालाः तृणबिंदोर्यशोधराः ३६ इतिनवमेद्वितीयः २ श्रीशुकउवाच

मानवः शर्यातिः ३ ब्रह्मिष्ठोबभूव सः आंगिरसांसत्रेद्वितीयेन्हिक्रियमाणंकर्मउवाच तस्यसुकन्यानामकन्याआसीत्
तयासहच्यवनाश्रमंवनंगतः सासखिभिः सहवनेवृक्षान्विचिन्वतीसती वल्मीकरंध्रेखद्योतइवद्वेज्योतिषीदृष्ट्वादैवेनोदि-
ता कंटकेनअविध्यत् ततः असृक्सुस्राव तदैवसैनिकानांशकृन्मूत्रनिरोधः अभूत् तदाराजर्षिः सैनिकान्अब्रवीत्युष्माभिः
भार्गवस्यअपराधः कृतः किंनु तदासुकन्यापितरंप्राह अजानंत्यामयाद्वेज्योतिषीकंटकेननिर्भिन्नेतच्छ्रुत्वाशर्यातिः मुनिंप्र-
सादयामास मुनेःअभिप्रायंज्ञात्वाकन्यांमुनयेदत्वाकृच्छ्रान्मुक्तःपुरंययौ ततः सुकन्यामुनिंप्रीणयामास कस्मिंश्चित्समये- २
नासत्यौश्चाश्रमंप्राप्तौतौपूजयित्वामुनिः प्रोवाच हेसद्वैद्यौमेतारुण्यंसंपादयतं अहंभवतोः असोमपोःसतोः युवांसोमेनयक्ष्ये

मेप्रमदानांईप्सितंवयोरूपंचेत्क्रियतांतौबाढमित्यूचतुः हे ऋषे अस्मिन् ह्रदेनिमज्जताम् इत्युक्तोमुनिः जरयाग्रस्तदेहः अश्वि-
भ्यांसहह्रदंविवेश ततः ह्रदात् सूर्यवर्चसः त्रयः पुरुषाः उत्तस्थुः तान् दृष्ट्वा पतिं अजानती साध्वी अश्विनौशरणंययौ तौतस्यै
पतिं दर्शयित्वाऋषिं आमंत्र्य स्वर्गं ययतुः कालेनयक्ष्यमाणः शर्यातिः च्यवनाश्रमंगतः तत्रकन्यासमीपेदिव्यंपुरुषंदृष्ट्वादुहि
तरंप्राह हेसुकन्येत्वंवृद्धंपतिंहित्वाजारंभजसे पितुः भर्त्तुश्चकुलंअधोनयसि इतिश्रुत्वासुकन्योवाच हेतात एषः भृगुनंदनः
तवजामाता इत्युक्त्वासर्वंपूर्ववृत्तंपित्रेशशंस तत्श्रुत्वाततयांपरिषस्वजे च्यवनः वीरंसोमेनयाजयन् अश्विनोः सोमपूर्ण
पात्रंअग्रहीत् तदाक्रुद्धः इंद्रः शर्यातिंहंतुंवज्रंआददे च्यवनः सवज्रंहस्तंस्तंभयामास ततः सर्वेअश्विनोः सोमग्रहंअजानन्
शर्यातेः उत्तानबर्हिः १ आनर्त्तः २ भूरिषेणः ३ इतिपुत्राः ३ आनर्त्तात् रेवतोजातः सः अंतः समुद्रेकुशस्थलींनिर्माय आस्थितः
सन् आनर्तादीन् बुभुजे तस्यककुद्मिज्येष्ठंपुत्रशतम् अभवत् ककुद्मीस्वांरेवतींकन्यांआदायवरंप्रष्टुंब्रह्माणंगतः तत्रगां
धर्वेआवर्तमानेसति क्षणंस्थित्वातदंतेस्वाभिप्रायंन्यवेदयत् तत्श्रुत्वाब्रह्माप्रहस्यआह अहोराजन् येत्वयाहृदिकृताः तेस
र्वेकालेनसंहृताः चतुर्युगविकल्पितः त्रिणवमितः कालोगतः इदानींदेवदेवांशः बलदेवः अस्तितस्मैइदंकन्यारत्नंदेहि इत्यादि
ष्टः अजंअभिवंद्य स्वपुरंआगत्यबलरामायकन्यांदत्वातप्तुंबदर्याश्रमंजगाम ३६ इतिनवमेतृतीयः ३ श्रीशुकउवाच
मनुपुत्रः नभगः ९ तस्यपुत्रोनाभागः सः गुरुकुलेचिरंअवसत् तदातस्यसर्वेभ्रातरः एनंनैष्ठिकंमत्वातस्यभागंअकल्प्यपितृ
धनंविभज्यजगृहुः कालेनसः आगत्यभ्रातॄन् प्रतिस्वभागंअपृच्छत् तेऊचुः अयंऊर्वरितः पितानेभागः तदापितरंगत्वाउवाच
हेपितः त्वमेवममभागः इति आर्याः कथयंति तदापिताउवाच हेपुत्रतेषांअनादरंमाकार्षीः तेजीवनोपायंउपदेक्ष्यामि हेकवेइ

मेआंगिरसः सत्रंकुर्वंति तेषष्ठदिनेकर्मणि मुह्यंतितान् त्वंद्वे सूक्तेशंसय तेस्वर्यंतः आंगिरसः सत्रशेषितंबहुधनंतुभ्यंदास्यं
ति तत्श्रुत्वासः तथाऽकरोत् तदाआंगिरसः सत्रपरिशेषितंसर्वधनंतस्मैदत्वास्व र्गंययुः स्वीकरिष्यंतंतंकश्चित् पुरुषःउवाच
इदंमदीयंवसु तदानाभागःउवाच मांइदंऋषिभिर्दत्तम् तदारुद्रउवाच इदंकस्यद्रव्यमितिपितरंपृच्छसः तंगत्वापृष्ट
वान् पितोवाच ऋषयः यज्ञवास्तुगतंशेषंभागंरुद्रायचक्रुः एवंश्रुत्वानाभागः रुद्रमागत्यप्रणम्यआह हेईशवास्तु
कंसर्वंतवभागः इतिमेपिताआह अहंत्वांशिरसाप्रसादये तदारुद्रउवाच यतः तेपिताधर्मंअवदत् त्वंसत्यंभाषसे तुभ्यं
ज्ञानंददामिमद्दत्तंद्रविणंचगृहाण इत्युक्त्वाशिवः अंतर्दधे इदंआख्यानंयः संस्मरेत् सः आत्मगतिंप्राप्नोति अथनाभागात् अं
बरीषः अभूत् यस्यब्रह्मशापोपिनअस्पृशत् राजोवाच हेभगवन् तस्यराजर्षेः ब्रह्मदंडः कुतः नप्रादुरभूत् इदंश्रोतुमि-
च्छामि श्रीशुकउवाच महाभागः अंबरीषः सर्वांमहींअव्ययांश्रियंचलब्ध्वासर्वंस्वप्नवत् मत्वावासुदेवे तद्भक्तेषुच सर्वा-
त्मभावंप्राप्तः सन् कृष्णपदारविंदयोः मनश्चकार भगवद्गुणानुवर्णनेवचांसिइत्यादि एवंभक्तिंकुर्वन् महींशशास अश्वमेधैः
हरिंईजे यस्यप्रजाभिः स्वर्गोनप्रार्थितः सः सर्वेंद्रियैः हरिंअभजत् तस्यभक्त्यातुष्टः हरिः संरक्षणायचक्रंअदात् सः सपत्नीकःसं
वत्सरंद्वादशीव्रतंदधार व्रतांतेकार्तिकेद्वादशीदिनेकालिंद्यांस्नात्वामधुवनेहरिंब्राह्मणांश्चसंपूज्यतेभ्यः षट्न्यर्बुदानिगाः द
त्वातान् भोजयित्वातदनुज्ञयापारणंकर्तुंउद्यतः तदैवदुर्वासाः अतिथिः प्राप्तः तंसंपूज्यभोजनायन्यमंत्रयत् सः राजानंप्रतिनंद्य
माध्याह्निकंकर्तुंयमुनांगत्वाब्रह्मध्यायन् निममज्जपारणांप्रतिमुहूर्तार्धावशिष्टायांद्वादश्यांधर्मज्ञःद्विजैः सहचिंतयामास ब्राह्म- ३
णातिक्रमे पारणातिक्रमेच दोषः एवंविचार्यनिश्चिनोति हेविप्राः केवलेनांभसापारणांकरिष्ये अब्भक्षणंअशितंनाशितंचआ

ओ॰ १ स्वर्गंगच्छंतः

हुः एवंचिंतयन् अपः प्राश्य द्विजागमनं प्रत्यैक्षत तदैव दुर्वासाः आगत्य राजचेष्टितं ज्ञात्वा चुक्रोध त्वं मां आतिथ्येन निमंत्र्य अदत्वा-
भुक्तवान् तस्य फलं दर्शये इत्युक्त्वा जटां मुत्पाट्य तया कृत्यां निर्ममे नृपः तां आपतंतीं वीक्ष्य स्थानात् न चचाल तदा विष्णुचक्रं कृ-
त्यां दग्ध्वा ऋषिं अन्वधावत् तदा ऋषिः भीतः सन् प्राणपरीप्सया दिक्षु दुद्रुवे यतो यतो याति तत्र तत्र चक्रं ददर्श एवं सर्वत्र भ्रमि-
त्वा ब्रह्माणं शरणं जगाम तदा नाहं समर्थ इति ब्रह्मवाक्यं श्रुत्वा शंकरं जगाम तदा शंकरः त्वद्रक्षणे नाहं समर्थः यस्य चक्रं तमेव
शरणं याहीत्युवाच तदा विष्णुं गत्वा त्राहि इति प्रार्थयामास तदा विष्णुः उवाच अहं भक्तपराधीनः ये दारादीन् हित्वा मां शरणं याताः
तान् त्यक्तुं कथं उत्सहे साधवः मम हृदयं साधूनां अहं हृदयं मदन्यत्ते न जानंति इत्यादि हे विप्र ते उपायं कथयामि शृणु हे ब्रह्मन् रा
जानं गत्वा क्षमापय ततः ते शांतिर्भविष्यति ७१ इति नवमे चतुर्थः ४ श्रीशुक उवाच एवं भगवता आदिष्टः दुर्वासाः च
क्रतापितः सन् अंबरीषं एत्य तत्पादौ अग्रहीत् तदा पादस्पर्शविलज्जितः राजा चक्रं अस्तौत् त्वं अग्निः सूर्यः ज्योतिषां पतिरित्यादि-
त्वां स्तोतुं कः समर्थः अतः तुभ्यं केवलं नमः उच्चारितवान् अस्मि इत्यादि स्तुत्वा प्रार्थयामास यद्यस्ति दत्तमिष्टं वा स्वधर्मो वा स्वनुष्ठि
तः कुलं नो विप्रदैवं चेद्द्विजो भवतु विज्वरः १ यदि नः सर्वभूतात्मभावेन भगवान्प्रीतश्चेत् तर्हि अयं द्विजः विज्वरो भवतु एवं स्तुव
तः राज्ञः चक्रं अशाम्यत् अस्त्राग्नितापेन मुक्तः दुर्वासाः स्वस्तिमान् सन् राजानं प्रशशंस अहो अनंतदासानां महत्वं अद्य मया द्द
ष्टं कृतागसोपि मम मंगलानि ईहसे इत्यादि हे राजन् अहं त्वया अनुगृहीतः मदघं पृष्ठतः कृत्वा मे प्राणाः रक्षिताः ततः अकृताहारः रा-
जा ऋषेः चरणौ संप्रगृह्य प्रसाद्य समभोजयत् सः आशिषः दत्वा नृपतिं भुज्यतामित्याह तव दर्शनादिभिः प्रीतोस्मि हे राजन्
एतत् तव कर्म स्वः स्त्रियः गायंति ते पुण्यां कीर्तिं इयं भूः कीर्तयिष्यति श्रीशुक उवाच एवं उक्त्वा ऋषिः ब्रह्मलोकं ययौ-

संवत्सरोत्यगात् तावत् यावत्तानागतोगतः मुनिस्तद्दर्शनाकांक्षोराजाब्भक्षोबभूवह १ एवंदुर्वाससिगतेसतिस्वयंबुभुजे ए
तत् सर्वं भगवदनुभावं मेने एवंविधोराजावासुदेवेक्रियाकलापैः भक्तिंकुर्वन् आविरिंच्यान् भोगान् निरयवत् मत्वाकालेनत-
नयेषुराज्यंविसृज्यवासुदेवेमनोनिवेश्यवनंविवेश एतत् पुण्यंआख्यानंयःकीर्तयन् ध्यायन् सः भगवतः भक्तोभवेत् २७
इतिनवमेपंचमः ५ श्रीशुकउवाच अंबरीषस्यपुत्राः ३ विरूपःकेतुमान् शंभुः विरूपात् पृषदश्वः त॰ रथीतरः सःअन
पत्यः तस्य भार्यया अंगिराः अपत्यार्थंप्रार्थितः सन् तस्यांपुत्रान् जनयामास तेब्रह्मवर्चस्विनः बभूवुः एतेरथीतरक्षेत्रेअंगि-
रसः वीर्येणजाताः अतोआंगिरसारथीतराश्च अभवन् ततः वैवस्वतमनोः क्षुवतः नासिकातः इक्ष्वाकुर्जज्ञे तस्यविकुक्षि
१ निमि २ दंडकाद्याः शतपुत्राः बभूवुः एकदाइक्ष्वाकुः अष्टकाश्राद्धे मांसानयनार्थंविकुक्षिंआदिशत् सःवनंगत्वामृगान्
हत्वाबुभुक्षितः सन् शशंभक्षयित्वा शेषंमांसंपित्रेनिवेदयामास तदाइक्ष्वाकुणानोदितः वसिष्ठः प्रोक्षणकालेतत्कर्मज्ञा
त्वाराज्ञेनिवेदयामास तदाइक्ष्वाकुःपुत्रंदेशान्निःसारयामास इक्ष्वाकुः योगेनदेहंहित्वातत्त्वंअवाप अथविकुक्षिःपितर्यु
परतेसति इमांपृथ्वींपालयामास सएवशशादइतिविश्रुतः अभूत् तस्यपुत्रः पुरंजयः इंद्रवाहः ककुत्स्थः इतिनामत्रयेणअ-
भूत् तस्यकर्मभिर्नामानिश्रृणु पुरादेवदैत्यसमरेदेवैर्वृतः सःउवाच इंद्रोयदिममवाहनंस्यात् तर्हिदैत्यान् हनिष्यामि एवंवाहन
त्वेनवृतः इंद्रःलज्जयातदनंगीकुर्वन् विष्णोर्वचनात् वृषभोबभूव तदावृषरूपेंद्रस्यककुदिस्थितःसः दैत्यान् हत्वा तेषांसर्वंधनं
इंद्रायप्रायच्छदितिपुरंजयात् अनेनाःत॰ पृथुःत॰ विश्वरंधिःत॰ चंद्रःत॰ युवनाश्वःत॰ शावस्तः येनशावस्तीपुरीनिर्मिता त॰ बृहदश्वः ४
त॰ कुवलयाश्वः सःएकविंशतिसहस्रपुत्रैः सहवृतः धुंधुनामासुरंअहनत् तेनधुंधुमारइतिविख्यातः धुंधोर्मुखाग्निनातत्सु

ताः सर्वेदग्धाः दृढाश्वः कपिलाश्वः भद्राश्वइतित्रयः अवशिष्टाः दृढाश्वात् हर्यश्वः त॰ निकुंभः त॰ पुत्रौद्वौ बर्हणाश्वकृशाश्वौ कृशा
श्वात् सेनजित् त॰ युवनाश्वः सः अनपत्यः भार्याशतेन सह वनंगतः तस्यपुत्रार्थंऋषयः ऐंद्रींइष्टिंचक्रुः निशि तृषितोराजाश
यानान् विप्रान् दृष्ट्वा अभिमंत्रितंजलंपत्न्यैदेयंस्वयंपपौ प्रातः तेमुनयः व्युदकंकलशंदृष्ट्वाराज्ञापीतंविदित्वा अहोदैवबलं-
बलंइत्युक्त्वाईश्वरायनमः चक्रुः ततः कालेप्राप्तेसतियुवनाश्वस्यदक्षिणंकुक्षिंभित्वानिर्गतः अयंकुमारः कंपास्यतिइतिवि-
प्रैःउक्तेसति तस्यांइष्ट्यांआराधितः इंद्रःमांधाताइतिब्रुवन् तन्मुखेतर्जनीमदात् तस्यपिताभिन्नकुक्षिरपिविप्रदेवप्रसाद
तः नममार कालांतरेण तत्रैवसः सिद्धिं अन्वगात् इंद्रः पुत्रस्यनामत्रसद्दस्युरितिविदधे यस्मात् रावणादयः त्रसंति असौमां-
धाता अवनिंशशास सः शशबिंदोः कन्यायांबिंदुमत्यांपुरुकुत्सं अंबरीषंमुचुकुंदंपंचाशत्कन्याश्चउत्पादयामास ताःसौभरिंप
तिंवव्रिरे एकदासौभरिः ऋषिः यमुनांतर्जलेमैथुनधर्मिणः मीनराजस्यनिर्वृतिंवीक्ष्यजातस्पृहः सन् मांधातारंगत्वाएकांक
न्यांअयाचत तदाराजासौभरिंवृद्धंदृष्ट्वास्वयंवरेकन्याकामंगृह्यतामित्युवाच तत्श्रुत्वाऋषिः अहंजरठः अतःराज्ञाएवंउक्तं
तस्मात् सुरस्त्रीणामपिईप्सितंरूपंसाधयिष्यामि इतिनिश्चित्यतथारूपंधृतवान् ततोराज्ञाकन्यांतःपुरेनिवेशितःसन्
सर्वाभिःएकएववृतः तद्गतचेतसांतासांममायंअनुरूपःनायंतवइतिकलहः अभूत् ततःसौभरिः ताभिःसह अनेककालं
गृहकाननादिषुरेमे ततःकालेननिर्विण्णःसन् वनंगत्वातपः तप्त्वाअग्निभिःसह आत्मानंपरमात्मनियुयोज ताःस्त्रियःतंअ
न्वीयुः ५५ इतिनवमेषष्ठः ६ श्रीशुकउवाच मांधातुःपुत्रज्येष्ठः अंबरीषःकथितः सःपितामहेनयुवनाश्वेनपुत्रत्वे
नस्वीकृतः तस्यपुत्रः यौवनाश्वः तस्यहारीतःएते ३ मांधातृगोत्रप्रवराः अथमांधातृपुत्रः पुरुकुत्सः तस्मैउरगैः स्वभगिनीनर्म

दादत्ता तयासः रसातलंनीतः सन् तत्रगंधर्वान् अवधीत् नागात् लब्धवरश्च आसीत् इदंस्मरतांसर्पादभयंस्यात् अथपुरुकुत्सा
त् त्रसद्दस्युः त॰ अनरण्यः त॰ हर्यश्वः त॰ अरुणः त॰ निबंधनः सत्यव्रतः असौत्रिशंकुरितिविश्रुतः सः गुरोः शापात् चांडालतां-
प्राप्तोपिविश्वामित्रप्रभावेन सशरीरः स्वर्गंगतः तत्रदेवैः अर्वाक्शिराः पातितोपि विश्वामित्रेणबलात् स्तंभितः सः अद्यापिदि
विदृश्यते त्रिशंकोः पुत्रः हरिश्चंद्रः यन्निमित्तं विश्वामित्रवसिष्ठयोः पक्षिणोः बहुकालंयुद्धं अभूत् हरिश्चंद्रः अनपत्यः नारदोप
देशतः वरुणंशरणंगत्वा मे पुत्रोजायतां तेनैव त्वांयजे इतिअयाचत वरुणः तथास्त्वित्युक्तवान् तदा रोहितोनामपुत्रोजातः त
दावरुणः एत्य अनेनमांयजस्वइत्याह तदा राजोवाच यदापशुःनिर्गतदशदिवसः स्यात् अथमेध्यः भवेत् निर्दशेसतिवरु-
णः आगत्य यजस्वेत्याह सोब्रवीत् यदापशोःदंताःजायेरन्॰ जातादंतायजस्वेतिसप्रत्याहाथसोब्रवीत् यदादंताः पतिष्यंति॰ प
शोर्निपतितादंतायजस्वेत्याहसोब्रवीत् यदापुनःदंताःभवेयुः पुनर्दंताजातायजस्वेति॰ यदायुद्धयोग्यः स्यात्॰ एवंपुनःपुनःव
रुणः आगत्ययजस्वेत्युक्तवान् तदाराजापुत्रानुरागेणकालंवंचयन् इत्युवाच ततः रोहितः पितुः चिकीर्षितंज्ञात्वा धनुःपाणिःव
नंअगात् तत् ज्ञात्वावरुणः राज्ञेमहोदरंविदधे तदारोहितःपितरंवरुणग्रस्तंश्रुत्वा ग्रामंएयाय तदाइंद्रःमार्गेतंभूसेः पर्यटनं
पुण्यंतीर्थक्षेत्रनिषेवणैरित्युक्त्वा प्रत्यषेधत एवंपंचवर्षपर्यंतंइंद्रः वृद्धोभूत्वातंन्यवर्तयत् एवंषट् संवत्सराणि तत्रचरित्वा
पुरींउपव्रजन् अजीगर्तात् शुनःशेपंमध्यमंपुत्रंक्रीत्वा पित्रे दत्त्वाववंदे ततोहरिश्चंद्रः मुक्तोदरः सन् पुरुषमेधेन वरुणादीन् ५

ओ॰ २ पितुः, ओ॰ ४ आडीबकयोः विश्वामित्रोराजसूयदक्षिणाछलेन हरिश्चंद्र सर्वस्वमपहृत्य यातयामास तच्छ्रुत्वाकुपितोवसिष्ठोपिविश्वामित्रंत्वमाडीभवे
ति शशाप सोपित्वंबकोभवेति वसिष्ठंशशाप तयोश्चयुद्धमभूदितिप्रसिद्धम्॰

अयजत् यत्रयज्ञेविश्वामित्रोहोता जमदग्निरध्वर्युः वसिष्ठोब्रह्मा अयास्यऋषिःउद्गाता अभूत् तत्रयज्ञेतुष्टः शक्रः तस्मैसौवर्णं रथंददौ शुनःशेपस्यमाहात्म्यंउपरिष्टात् प्रवक्षते सभार्यस्य भूपतेःप्रीतः विश्वामित्रः ज्ञानंददौ अनुहरिश्चंद्रोमनः भूमौधारय न् तां अद्भिरेकीकुर्वन् तत् तेजसा॰ तत् वायुना॰ तमाकाशे॰ तत् अहंकारे॰ तंमहत्तत्त्वे॰ तस्मिन् ज्ञानांशं ध्यात्वातेन अज्ञानंदहन् तंचहित्वामुक्तबंधः सन् स्वस्वरूपेणतस्थौ २७ इतिनवमस्कंधेचूर्णिकायांसप्तमोऽध्यायः७ श्रीशुकउवाच रोहितात् हरितः त॰ चंपः येनचंपापुरीनिर्मिता त॰ सुदेवः त॰विजयः त॰ भरुकः त॰ वृकः तस्यबाहुकः सःशत्रुभिः हृतराज्यः सन् वनंगत्वाकालेनमृतः तस्यपत्नीं अग्निं प्रवेष्टुकामां दृष्ट्वा और्वऋषिणा सगर्भा ज्ञात्वानिवारिता तत् ज्ञात्वातस्यै सपत्नीभिः गरोदत्तः तेन सहसाकुमारं सुषुवे सःसगराख्यः चक्रवर्तीआसीत् यत्सुतैः सागरः कृतः किंच यःऔर्वबचसातालजंघान् यवनान् शकान् हैहयबर्बरान् अहत्वैव विकृतवेषिणश्चक्रे सः और्वोपदिष्टयोगेन आश्वमेधैर्हरिं अयजत् इंद्रः तस्य अश्वंजहार राज्ञः षष्टिसहस्राणिपुत्राः हयं अन्वेषमाणाः संतः ईशान्यांदिशिकपिलांतिकेहरिंददृशुः अहो एषः वाजिहरः चोरः मीलितलोचनः आस्ते एषः हन्यतां हन्यतां इत्युक्त्वाउदायुधाः अभिययुः तदामुनिः लोचनोन्मीलनंचकार तदामहद्व्यतिक्रमात् तेषामेव शरीरात् उत्पन्नेन अग्निनाते सर्वे भस्मसात् अभवन् केचित्तुकपिलस्य कोपाग्निनादग्धा इतिवदंति तदसंगतम् कुतः सत्वमूर्तौ कपिले भेदस्य असंभवात् नैवमिति सगरस्य केशिन्यां अन्य भार्यायां असमंजस इति पुत्रोजातः त॰ अंशुमान् सः असमंजसः लोके आत्मानं असमंजसंदर्शयन् ज्ञातीनां अप्रियं आचरन् सरय्वां बालान् प्राक्षिपत् एवंवृत्तः पुत्रः पित्रात्यक्तः सन् योगबलेन मृतबालान् दर्शयित्वा ततोययौ सर्वे अयोध्यावासिनः पुनःप्राप्तान् बालान् दृष्ट्वा विसिस्मिरे राजा अन्वतप्यत

औ॰ ६ विपष्

ततः राज्ञा अश्वान्वेषणेचोदितः अंशुमान् पितृव्यमार्गेगत्वा भस्मसमीपे हयंददृशे तत्रासीनंकपिलं दृष्ट्वा अस्तौत् हे कपिल ब्रह्मा
पिईश्वरंत्वांनपश्यति तंज्ञानघनंसनंदनादिमुनिभिर्भाव्यंत्वांअहंमूढः कथंपरिभावयामि हे प्रशांत तस्मात् ज्ञानोपदेशाय गृ
हीतदेहंत्वांनमामइत्यादि तदाप्रसन्नः कपिलः उवाच हेवत्सतेपितामहपशुः अयंअश्वःनीयतां इमेतवपितरोदग्धाः गंगांभः अ
र्हंति नेतरत् इतिश्रुत्वातंपरिक्रम्यशिरसानमस्कृत्यहयंआनयत् सगरः तेनक्रतुशेषंसमापयत् ततः अंशुमतिराज्यंन्यस्यमु-
क्तबंधनः राजाऔर्वोपदिष्टमार्गेणअनुत्तमांगतिंलेभे ३१ इतिनवमेऽष्टमः८ श्रीशुकउवाच अंशुमान् गंगानयन
काम्ययातपस्तेपेसः कालेनमृतः तत्सुतः दिलीपः तद्वत्तपस्तेपे सोऽपिमृतः भगीरथस्तस्यपुत्रस्तेपे ससुमहत्तपः तं प्रतिगंगा
आत्मानंदर्शयामास हे भगीरथ ते अहंवरदास्मि एवंगंगयाउक्तः राजास्वाभिप्रायंतस्यै शशंस तत्श्रुत्वा गंगाआह गगनात्
महीतलेपतंत्याः ममवेगंकोपिधारयिष्यति अन्यथारसातलंयास्ये किंच नराःमयिअघंमृजंति तत् कुत्रसृजामि हेराजन्
तत्रउपायोविचिंत्यताम् भगीरथउवाच साधवः तेअघंहरंति रुद्रः तेवेगंधारयिष्यति इत्युक्त्वासः तपसाशिवंअतोष
यत् ततः प्रसन्नः शिवः गंगांदधार भगीरथः यत्रपितॄणांदेहाः भस्मीभूताः तत्रगंगांनिन्ये वायुवेगेनरथेनप्रयांतं अनुधा
वंतीदेशान् पुनंतीसगरात्मजान् आसिंचत् यस्याःजलस्पर्शमात्रेण ब्रह्मदंडहता अपिसगरात्मजाः दिवंजग्मुः येतुश्रद्ध-
यागंगांसेवंते तेस्वर्गंगच्छंतीतिकिंवक्तव्यम् भगीरथात्श्रुतः त॰ नाभः त॰ अपरः त॰ सिंधुद्वीपः त॰ अयुतायुः त॰ ऋतु ६
पर्णः यः नलाय अक्षहृदयंदत्वातस्मात् अश्वविद्यांप्राप्तः त॰ सर्वकामः तस्मात् सुदासः त॰ मदयंतीपतिः सौदासः ए-
नंमित्रसहं कल्माषांघ्रिंआहुः सः वसिष्ठशापात् राक्षसः अनपत्यश्चअभूत् राजोवाच सौदासस्यगुरोःशापःकुतः

एतत् कथ्यताम्      श्रीशुकउवाच      सौदासः मृगयांचरन् कंचित् राक्षसंजघान तस्यभ्राता पलाय्यगतः सः राज्ञः अपंचिं
तयन् सूदरूपो भूत्वा तद्गृहे वर्तमानः सन् भोक्तुकामाय गुरवेन रामिषं पक्त्वा आनिन्ये वसिष्ठः तत्परि वेक्ष्यमाणं अभक्ष्यं नृमां
सं विलोक्य क्रुद्धः सन् राजानं रक्षो भविष्यसीति अशपत् अग्रे रक्षः कृतं तद्विदित्वा द्वादशवार्षिकं शापंचक्रे ततः राजा गुरुं शप्तुं
अंजलौ अपः गृहीत्वा उद्यतः तदा तत्पत्न्या मदयंत्या निवारितः ततः ताः तीक्ष्णाः अपः सर्वजीवमयं पश्यन् स्वपादयोः जहौ ततः
राक्षसं भावं आपन्नः पादे कल्माषतां गतः सः एकदा वने मैथुनासक्तौ वनौकसौ दंपती दृष्ट्वा क्षुधार्तः सन् तत्रत्यं विप्रं जगृहे तदा त
त्पत्नी उ० भवान् राक्षसः न किंतु इक्ष्वाकूणां वंशजोसि मदयंत्याः पतिस्त्वं अधर्मं कर्तुं नार्हसि अपत्यकामायाः मे अपूर्णरतिं पतिं
देहि अयं ब्रह्मवेत्ता यद्येनं भक्ष्यसि तर्हि मां पूर्वं खाद एवं अनाथवत् विलपंत्याः सत्याः शापमोहितः सौदासः तं अखादत् सा
स्त्री राक्षसेन भक्षितं पतिं वीक्ष्य कुपिता सती आह हे पापकामार्तायाः मे पतिः यतस्त्वया भक्षितः तस्मात् स्त्रीसंगात्त्वं मरिष्यसि
एवं सौदासं शप्त्वा भर्तुः गतिंगता ततः राजा द्वादशाब्दांते विशापः सन् मैथुनाय उद्यतः तदा ब्राह्मणी शापं विज्ञाय महिष्या निवा
रितः ततऊर्ध्वं स्त्रीसुखं तत्याज तेन कर्मणा अप्रजः तेनानुज्ञातः वसिष्ठः मदयंत्यां गर्भं अधात् सा सप्त वर्षाणि गर्भं दधार ततः
वसिष्ठः अश्मना उदरं भित्त्वा निष्काशितः तेन अश्मकः कथ्यते त० मूलकः यः स्त्रीभिः स्त्रवेषं दत्त्वा परशुरामात् रक्षितः अतो ना
रीकवच इति नामांतरं सः निःक्षत्रे सति क्षत्रस्य मूलं अतो मूलक इति च उक्तः त० दशरथः त० ऐडबिडः त० विश्वसः त० खट्वांगः च
क्रवर्ती अभवत् यः देवैः अर्थितः दैत्यान् अवधीत् प्रसन्नदेवैः वरं वृणीष्वेत्युक्ते प्रथमं तावत् आयुः कथ्यतामित्याह देवैः उक्तं मु
हूर्त्तमात्रं आयुर्ज्ञात्वा विमानेन स्वपुरं एत्य परमेश्वरे मनः संदधे एतद्दर्शयति मम ब्रह्मकुलात् प्राणात्मजादयो न वल्लभाः मे म-

तिः बाल्येऽपि अधर्मे नरमते विष्णोरन्यत् वस्तु न पश्ये मह्यं देवैः वरो दत्तः तं अहं न वृणे ये देवास्तेपि स्वहृत्स्थं आत्मानं न पश्यंति
अतः अहं गुणेषु संगं हित्वा तमेव प्रपद्ये इति बुद्ध्या व्यवसितः अज्ञानं हित्वा यं वासुदेवं इति गृणंति तं स्वं भावं आश्रितः ४९ इति
नवमस्कंधे नवमः ९ श्रीशुक उवाच खट्वांगाद्दीर्घबाहुः तस्य रघुः तस्य अजः तस्य दशरथः तस्य देवैः प्रार्थितो हरिः राम
लक्ष्मण भरत शत्रुघ्नाः इति चतुर्धा पुत्रत्वं अगात् तस्य चरितं ऋषिभिर्वर्णितं त्वया श्रुतम् यः श्रीरामः गुर्वर्थे राज्यं त्यक्त्वा वनं
विवेश तत्र शूर्पणख्याः वैरूप्यकरणात् सीता रावणेन हृता तेन क्रुद्धः सः समुद्रं गत्वा सेतुं बबंध ततः रावणादीन् अहनत् एवं
भूत ईश्वरः नः अवतु किंच यः गच्छन् पथि ताटिकां हत्वा विश्वामित्राध्वरे मारीचादीन् अहनत् यः जनकगृहे शैवं धनुः भंक्त्वा सी
तां जित्वा पथि परशुरामदर्पं अपनयत् ततः नगरं एत्य पितुराज्ञया सीता लक्ष्मण सहितः वनं ययौ शूर्पणखाया रूपं व्यंकृतं ततः
खरत्रिशिरादि चतुर्दशसहस्र राक्षसान् हत्वा दंडकारण्ये उवास ततः मृगवपुषं मारीचं जघ्ने तदा रामः रावणेन सीता हृता अतः
शोचन् सन् सलक्ष्मणः वने चचार तत्र जटायुषं पुत्रवत् दग्ध्वा स्वग्रहणाय प्रसारित बाहुं कबंधं हत्वा कपिभिः सख्यं विधाय वा
लिनि हते सति तैः सीतागतिं ज्ञात्वा समुद्रतीरं अगात् तत्र त्रिरात्रोपवासेन प्रतीक्षितोपि सिंधुर्यदा नोपस्थितः तदा यस्य रो
षेण भीतः सिंधुः अर्हणं परिगृह्य पादारविंदं उपगम्य इदं उवाच हे भूमन् वयं जडधियः त्वां न विदाम इत्यादि हे राम त्वं जलं-
आक्रम्य कामं याहि तथा रावणं जहि पत्नीं प्राप्नुहि हे वीर इदं जलं ते प्रतिबंधकं न तथापि यशो विस्ताराय सेतुं बध्नीहि ततो
रामः उदधौ सेतुं बध्वा बिभीषणदृशा लंकां विवेश सा लंका वानरेंद्रसैन्यैः घूर्णा बभूव तत् दृष्ट्वा रावणः निकुंभ कुंभ धूम्रा
क्षादीन् इंद्रजितं कुंभकर्णं च प्राहिणोत् तान् रामदूता वानराः गिरिगदेषुभिः जघ्नुः ततो रुष्टः रावणः पुष्पकं विमानं आरुह्य

रामंअभ्यधावत् ततोरामः तंबहुधाक्षिपन् धनुषिसंधितंबाणमुत्सृज्य तेनतद्धृदयंबिभेद सःदशमुखैः असृक्वमन् न्यपतत्
ततोमंदोदर्याद्याः स्त्रियः रुदंत्यः तत्रएत्य स्वपतीन् आलिंग्य रुरुदुः ऊचुश्च हे रावणवयंहताःस्म त्वद्विहीनालंकाकंशरणंयाया
त् भवान् कामवशंगतः सीतायास्तेजोनुभावंनवेद येनइमांदशांप्राप्तः एषालंकाविधवाकृता वयंच इत्यादिविलापंचक्रुः
श्रीशुकउवाच रामाज्ञयाबिभीषणः स्वानांऔर्ध्वदेहिकंचक्रे ततःरामःसीतांगृहीत्वा यानंआरुरुहे रामःबिभीषणायर
क्षोगणेशतांकल्पांतंआयुश्चदत्वास्वपुरींययौ तदागोमूत्रयावकंजटिलंवल्कलांबरंभरतंश्रुत्वाअतप्यत् भरतःप्राप्तंरामं-
श्रुत्वापादुकेशिरसिधृत्वापौरामात्यपुरोहितैः ब्राह्मणैः सहराजचिन्हान्युपादायरामंएत्यपादुकेपुरतः न्यस्यप्रेम्णापादयोः
न्यपतत् रामः तंचिरं आश्लिष्यनेत्रोदकैः स्नापयामास विप्रेभ्यः नमश्चक्रे चिरागतंरामंवीक्ष्यजनाः माल्यैःकिरंतः नृनृतुः भरतः
पादुकेअगृह्णात् बिभीषणःचामरं सुग्रीवः व्यजनं मारुतिः श्वेतछत्रं शत्रुघ्नः धनुर्निषंगान् सीतातीर्थकमंडलुं अंगदःखड्गं जां
बवान् चर्म एवंविधः रामः बंदिभिः स्तूयमानः पुष्पकस्थः ग्रहैश्चंद्रइवरेजे ततःस्वपुरंप्रविश्यगुरुंस्वमातॄः ननाम मातरःतं
अंके आरोप्यबाष्पौघैः सिंचंत्यः शुचः जहुः वसिष्ठः रामंसिंहासनेअभ्यषिंचत् रामःपितृवत् प्रजाःजुगोप प्रजाःतंपितरंमेनिरे
कालःकृतसमःअभवत् रामेराज्ञिसति सर्वेवनादयः कामदुघाआसन् यत्रआध्याद्योनसंति स्वयंगृहधर्मैलोकान् शिक्षयन् आ
चरत् भावज्ञासीताप्रेमादिभिर्भर्तुर्मनः अहरत् ५५ इतिनवमेदशमः१० श्रीशुकउवाच भगवान्रामःमखैः सर्वदे-
वमयंआत्मानंईजे यत्रयज्ञेहोत्रेप्राचींदिशंददौ ब्रह्मणेदक्षिणांअध्वर्यवेप्रतीचींसामगायउदीचींशेषांसर्वांआचार्याय इदं-
सर्वंब्राह्मणएव अर्हतीतिमन्यमानः वासोभ्यांअवशेषितः तथासीताअपिसौभाग्यद्रव्यावशेषिताआसीत् तेऋत्विजःराम

स्यवात्सल्यंवीक्ष्यप्रीताः संतः तस्मै सर्वं दत्वाऊचुः हे भगवन् त्वयाकिंनुनदत्तम् त्वंनः अंतर्हृदयं विश्यतमः हंसितस्मैतुभ्यंन
मः कदाचित् लोकवृत्तिंजिज्ञासुः रामः रात्र्यांगूढः चरन् कस्यचिज्जायां उद्दिश्य वाक अशृणोत् नाहंबिभर्मित्वांदुष्टामसतींपर
वेश्मगाम् स्त्रीलोभीबिभृयात्सीतांरामोनाहंभजे पुनः इति लोकापवादात् भीतेन रामेणत्यक्तासीता अंतर्वत्नी सती वाल्मीकेः
आश्रमं कालेन प्राप्ता काले प्राप्ते कुशलवौ सुषुवे तयोः जातकर्माद्याः क्रियाः मुनिश्चक्रे अंगदः चित्रकेतुश्च लक्ष्मणपुत्रौ तक्षपु-
ष्कलौभरतपुत्रौ सुबाहुशतसेनौ शत्रुघ्नपुत्रौ भरतः दिग्विजयेकोटिशः गंधर्वान् जघ्ने शत्रुघ्नः मधोः पुत्रंलवणाख्यरं हत्वा मधुव
ने मथुरांनाम पुरीं चक्रे सीतापुनौपुत्रौस्थाप्य रामचरणौ ध्यायती विवरं प्रवेश रामः तद्गुणान् स्मरन् ततऊर्ध्वंब्रह्मचर्यंधार-
यन् त्रयोदशसहस्रवर्षाणि अग्निहोत्रं अजुहोत् ततः भक्तानांहृदि स्वपादपल्लवं विन्यस्य निजंधाम प्रत्यगात् यैः संस्पृष्टो
भिदृष्टोवासंविष्टोनुगतोपिवा कोसलास्तेययुः स्थानं यत्र गच्छंति योगिनः हे राजन् पुरुषः रामचरितं शृण्वन् कर्मबंधाद्विमुच्य
ते राजोवाच हेशुक सः रामः स्वयं भ्रातॄन् वाकथंअवर्तत तथा तस्मिन् रामे ते भ्रातरः प्रजाश्च कथं अवर्तंत तद्वद
श्रीशुकउवाच रामः भ्रातॄन् दिग्विजये आदिशत् ततः पुरीमैक्षत कथंभूतांतां गंधोदकादिभिः सिक्तमार्गांपताकादिभिर्मं
डितां पूगरंभादिभिः शोभितां ततः तंरामं पौराः उपेयुः आशिषोददुः हे देव पृथ्वींपाहि ततः प्रजाः चिरागतंपतिंवीक्ष्य हर्म्या
णि आरुह्य कुसुमैः अवाकिरन् अथ अनेकोपस्करैर्युक्तं स्वगृहं प्रविष्टः रामः प्रियया सीतया सह रेमे किंच यथाकालं बहू
न् वर्षपूगान् कामान्बुभुजे ३६ इतिनवमेएकादशः ११ श्रीशुकउवाच कुशस्यपुत्रः अतिथिः त॰ निषधः त॰
नभः त॰ पुंडरीकः त॰ क्षेमधन्वा त॰ देवानीकः त॰ अनीहः त॰ पारियात्रः त॰ बलः त॰ स्थलः त॰ अर्कसंभूतः त॰ वज्रनाभः त॰ ख

गणः त० विधृतिः त० हिरण्यनाभः सः जैमिनेः शिष्योभूत् त० याज्ञवल्क्यः अध्यात्मयोगंप्राप त० पुष्यः त० ध्रुवसंधिः त० सुदर्शनः
त० अग्निवर्णः त० शीघ्रः त० मरुः यः योगसिद्धः सन् कलापग्रामंस्थित्वा कलेरंते नष्टं सूर्यवंशं पुनर्भावयिष्यति त० प्रसुश्रुतः त-
स्यसंधिः त० अमर्षणः त० महस्वान् त० विश्वसाह्वः त० प्रसेनजित् त० तक्षकः त० बृहद्बलः एतेऐक्ष्वाकु भूपालाः अतीताः अना
गतान् शृणु त० बृहद्रणः त० उरुक्रियः त० वत्सवृद्धः त० प्रतिव्योमः त० भानुः त० दिवाकः त० सहदेवः त० बृहदश्वः तस्यभानुमान्
त० प्रतीकाश्वः त० सुप्रतीकः त० मरुदेवः त० सुनक्षत्रः त० पुष्करः त० अंतरिक्षः त० सुतपाः त० अमित्रजित् त० बृहद्राजः त० बर्हिः
त० कृतंजयः त० रणंजयः त० संजयः त० शाक्यः त० शुद्धोदः त० लांगलः त० प्रसेनजित् त० क्षुद्रकः त० रणकः त० सुरथः त० सुमित्रः
इक्ष्वाकूणामयंवंशः सुमित्रांतोभविष्यति यतस्तंप्राप्य राजानं संस्थांप्राप्स्यति वैकलौ १५ इतिनवमेद्वादशः १२
श्रीशुकउवाच इक्ष्वाकुपुत्रोनिमिः सत्रंआरभ्य वसिष्ठं ऋत्विजं वव्रे तदावसिष्ठः आह० अहं शक्रेण प्राक् वृतोस्मि अतः
तं क्रतुं कृत्वा आगमिष्ये तावत् मां प्रतीक्षस्व इत्युक्त्वा इंद्रस्यमखंअकरोत् निमिः इदं अनित्यं शरीरं ज्ञात्वा अपरैः ऋत्विग्भिः
यावत् गुरुर्नागतः तावत् सत्रं आरभत वसिष्ठः इंद्रमखंनिर्वर्त्य आगतः सन् शिष्यस्य अन्यायं दृष्ट्वानिमेर्देहः पततु इति अ
शपत् तदानिमिः लोभात् धर्मं अजाननः तवापिदेहः पततु इतिगुरवे अशपत् इत्युक्त्वा स्वदेहं उत्ससर्ज ततः उर्वशीदर्शनात्
मित्रावरुणयोः स्कन्नं रेतः ताभ्यांकुंभेनिक्षिप्तं तस्मात् वसिष्ठोजज्ञे मुनयः गंधद्रव्येनिमेर्देहं स्थाप्यसत्रंसमाप्य प्राप्तान् दे
वान् प्रति राज्ञः अयं देहः जीवतु इत्यूचुः देवैः तथेत्युक्ते सतिनिमिः जीवन् सन् प्राह मेदेहबंधनंमाभूत् यतः वियोगभयकात-
राः मुनयः यस्ययोगंनवांछंति देवाऊचुः विदेहः देहिनांनेत्रेषु वसतु एवंसति युष्माभिः प्रार्थितंजीवितं अस्य भवेत् देहबंध-

श्चन ततः उन्मेषनिमेषाभ्यां लक्षितः अवर्तत ऋषयः अराजके नृणां भयं मत्वा निमेर्देहं ममंथुः तदाकुमारः समजायत सएव
जन्मनाजनकः अभूत् विदेहजः अतः वैदेहोऽभूत् मथनाज्जातः अतः मिथिलः अभूत् येनमिथिलानिर्मिता विदेहात् उदाव
सुः तस्यनंदिवर्धनः तस्यसुकेतुः तस्यदेवरातः तस्य बृहद्रथः तस्य महावीर्यः तस्य सुधृतिः त॰ धृष्टकेतुः त॰ हर्यश्वः त॰ मरुः त॰
प्रतीपकः त॰ कृतिरथः त॰ देवमीढः त॰ विश्रुतः त॰ महाधृतिः त॰ कृतिरातः त॰ महारोमा त॰ स्वर्णरोमा त॰ ह्रस्वरोमा त॰ सीरध्वजः
सः यज्ञार्थं महीं कर्षतः सतः लांगलाग्रात् सीताजाता अतएव सीरध्वज इति तस्यनाम तस्मात् कुशध्वजः त॰ धर्मध्वजः तस्य द्वौ
पुत्रौ कृतध्वजमितध्वजौ कृतध्वजात् केशिध्वजः मितध्वजात् शांडिक्यः केशिध्वजस्य भानुमान् त॰ शतद्युम्नः त॰ शुचिः त॰
सनद्वाजः त॰ ऊर्ध्वकेतुः त॰ अजः त॰ पुरुजित् त॰ अरिष्टनेमिः त॰ श्रुतायुः त॰ सुपार्श्वकः त॰ चित्ररथः त॰ क्षेमधिः त॰ समरथः त॰ स
त्यरथः त॰ उपगुरुः त॰ उपगुप्तः त॰ वस्वनंतः त॰ युयुधानः त॰ सुभाषणः त॰ श्रुतः त॰ जयः तस्मात् विजयः त॰ ऋतः त॰ शुनकः
त॰ वीतिहव्यः त॰ धृतिः तस्मात् बहुलाश्वः त॰ कृतिः त॰ महावशी हे राजन् एते मैथिलाः योगेश्वरप्रसादेन गृहेष्वपि द्वंद्वैर्मुक्ता
आसन् २७ इतिनवमेत्रयोदशः १३ श्रीशुकउवाच हे राजन् सोमस्य पावनः वंशः श्रूयताम् यस्मिन् ऐलादयः भू
पाः कीर्त्यंते आदौ नारायणस्य नाभिपद्मात् ब्रह्मा आसीत् तस्मात् अत्रिः त॰ दृग्भ्यः सोमः अभवत् सः विप्रौषध्युडुगणानां ब्र
ह्मणा पतिः कल्पितः सः सोमः भुवनत्रयं जित्वा राजसूयेन अयजत् सः बृहस्पतेः भार्यां तारां दर्पात् अहरत् यदा देवगुरुणा या
चितः चंद्रः तां न अदात् तत्कृते देवदैत्यविग्रहो जज्ञे ततः बृहस्पतेः द्वेषात् दैत्यैः सह शुक्रः चंद्रसहायः अभूत् सर्वभूतगणा ९
वृतः हरः देवैः सहितः इंद्रश्च गुरुं अन्वयात् तस्मिन् युद्धे देवदैत्यनाशः अभूत् अंगिरा प्रार्थितो ब्रह्मा सोमं निर्भर्त्स्य तारां गुर

वेप्रायच्छत् गुरुः अंतर्वत्नीं तां ज्ञात्वा आह हे दुःप्रज्ञे परैः आहितं गर्भं आ शु त्यज त्यज संतानार्थी अहं अतस्त्वां भस्मसान्न कुर्याम्
ततः व्रीडिता सा कनकप्रभं कुमारं तत्याज तं दृष्ट्वा बृहस्पति सोमौ इच्छां चक्राते ममायं न च तवेति उच्चैर्विवदतुः तदा देवैः ऋषि-
भिः पृष्टा सा किमपि नोचे तदा कुमारः कुपितः सन् मातरं वदेत्याह ततः ब्रह्मा तां रहसि अपृच्छत् सा सोमस्य पुत्रः इत्याह तं सो
मः अग्रहीत् ब्रह्मा तस्य बुध इति नाम चक्रे चंद्रः पुत्रेण मुदं आप ततः बुधात् इलायां पुरूरवा जज्ञे उर्वशी इंद्रभुवने नारदात् तद्रू
पगुणादीन् श्रुत्वा मित्रावरुणयोः शापात् भुवं एत्य पुरूरवः समीपं गत्वा धैर्यं धृत्वा तदंतिके उपतस्थे सः तां विलोक्य मोहितः स
न् उवाच हे उर्वशि अत्रास्यतां ते भद्रं मया सार्कं रमस्व उर्वश्युवाच हे सुंदर कस्याः मनः त्वयि न सज्जेत तथापि मम नि
यम पर्यंतं अत्र स्थास्यामि हे राजन् एतौ मम उरणकौ रक्षस्व मे भक्ष्यं घृतं मैथुनात् अन्यत्र विवाससं त्वां न ईक्षिष्ये तथेति राजा
अंगीकृतवान् ततः स्वैरविहारादिषु तया सह कामं रेमे किंच तया सह रममाणः बहून् अहर्गणान् मुमुदे इंद्रः एकदा उर्वशीं अ
पश्यन् सन् तां आनेतुं गंधर्वान् अचोदयत् ते महारात्रे एत्य उर्वश्याः उरणौ जह्रुः देवी तयोः पुत्रयोः आक्रंदितं श्रुत्वा शुशोच तदा
राजा खड्गं गृहीत्वा नग्न एव अभ्यद्रवत् गंधर्वाः तं दृष्ट्वा उरणौ विसृज्य दीप्तिं अकुर्वत मेषौ आदाय आयांतं नग्नं दृष्ट्वा सा अगच्छ
त् अतः भाषाभंगात् सा निर्जगाम राजापि शयने तां अदृष्ट्वा उन्मत्तवत् महीं बभ्राम बहुकालेन कुरुक्षेत्रे तां दृष्ट्वा उवाच अहो
जाये तिष्ठ तिष्ठ मां त्यक्तुं नार्हसि हे देवि अयं देहः पतति त्वया दूरं हृतः अतः एनं वृकाद्याः खादंति उर्वश्युवाच हे राजन् त्वं
पुरुषोसि धैर्यं आवह मा म्रियस्व स्त्रियः स्वभावतः क्रूराः तासां सख्यं कापि न वृकाणां हृदयं यथा याः अल्पार्थे पतिं भ्रातरं घ्नंति
तासां सख्यं सत्यं न अथ संवत्सरांते एकरात्रं मया सह त्वं वत्स्यसि ते अपराणि अपत्यानि भविष्यंति श्रीशुक उवाच राजा

ओ॰ ७ मेषौ.

तां अंतर्वत्नीं ज्ञात्वा पुरं ययौ पुनः अब्दांते कुरुक्षेत्रं गत्वा तया सह एकरात्रं रेमे उर्वशी तं प्राह त्वं गंधर्वान् उपधावते मां तुभ्यं दास्यंति
सः तथा चक्रे गंधर्वाः तं अग्निस्थालीं ददुः सः तां उर्वशीं मत्वा वने विचरन् पश्चात् अग्निस्थाली इत्यबुध्यत ततः तां स्थालीं वने न्य
स्य गृहे गतः ततः त्रेतायां संप्रवृत्तायां तन्मनसि त्रयी अवर्तत पुनः राजा स्थालीस्थानं गत्वा तत्र शमीगर्भं अश्वत्थं दृष्ट्वा तेन द्वे अर
णी कृत्वा उर्वशीलोककाम्यया ममंथ तस्मादग्निः उत्पन्नः सः राज्ञा पुत्रत्वे कल्पितः ततः उर्वशीलोकं इच्छन् तेन अग्निना हरिं अय
जत् आदौ कृतयुगे प्रणवः एक एव वेदः देवः नारायणः एक एव अग्निश्च लौकिकः एक एव वर्णश्च हंसो नाम एक एव आसीत् हे नृप
त्रेतामुखे पुरूरवस एव वेदत्रयी आसीत् राजा अग्निना प्रजया गांधर्वलोकं प्राप ४९ इति नवमे चतुर्दशः १४ श्रीशुक उवा॰
ऐलस्य उर्वशीगर्भात् षट् पुत्रा आसन् आयुः १ श्रुतायुः २ सत्यायुः ३ रयः ४ विजयः ५ जयः ६ तत्र श्रुतायोः वसुमान् पुत्रः
सत्यायोः श्रुतंजयः रयस्य एकः संज्ञः जयस्य अमितः विजयस्य भीमः ततः कांचनः ततः होत्रकः तस्य जन्हुः यः गंगां गंडूषीकृत्य
अपिबत् त॰ पूरुः त॰ बलाकः त॰ अजकः त॰ कुशः त॰ पुत्राः ४ कुशांबुः १ मूर्तरयः २ वसुः ३ कुशनाभः इति ४ कुशांबोः गाधिः त
स्य सत्यवती कन्या अभूत् तां ऋचीकः अयाचत गाधिः विसदृशं वरं मत्वा भार्गवं ऋचीकं अब्रवीत् हे ऋषे एकतः श्याम कर्णा
नां हयानां सहस्रं शुल्कं दीयतां इदं अपि मे कन्यायाः पर्याप्तं न एव मुक्तः ऋषिः तन्मतं ज्ञात्वा वरुणात् अश्वान् आनीय गाधि
ये दत्वा सत्यवतीं उपयेमे ऋचीकः पत्न्या श्वश्र्वा च अपत्यकामनया प्रार्थितः सन् उभय मंत्रैः चरुं श्रपयित्वा स्नातुं गतः यावत् स्ना १०
त्वा सः नागतः तावत् सत्यवती मात्रा स्वचरुं याचिता सती श्रेष्ठं मत्वा तया यच्छन् मात्रे मातुः अदात् स्वयं मुनिः तद्विज्ञाय पत्नीं मा
ह तव पुत्रः दंडधरो भविष्यति तव भ्राता ब्रह्मवित्तमः भवेत् ततः एवं मा भूदिति सत्यवत्या प्रार्थितः ऋषिः आह एवं चेत्तर्हि पौ-

ओ॰ ३ कर्मबोधकं वेदत्रयं प्रादुरभूत्,

न्नो घोरो भविष्यति ततः ऋचीकात् जमदग्निः अभूत् सत्यवती कौशिकीनामनदी अभूत् जमदग्निः रेणोः सुतां रेणुकां उवाह तस्यां
वसुमदादयः पुत्रा अभवन् तेषां कनीयान् वासुदेवांशः रामः जज्ञे यः एकविंशतिवारं महीं निःक्षत्रियां चक्रे किंच क्षत्रेण फल्गुन्यपि
अंहसि कृते दुष्टक्षत्रं नाशयामास राजोवाच राजन्यैः तस्य अंहः किं कृतं येन क्षत्रियाणां कुलं नष्टं श्रीशुक उवाच हे
नृप हैहयानामधिपः अर्जुनः दत्तात्रेयं आराध्य बाहूनां सहस्रं शत्रुषु दुर्धर्षत्वं योगेश्वरत्वं अणिमाद्यैश्वर्यं च लेभे सः अव्याहतग
तिः चचार यदा सः स्त्रीभिः सह रेवांभसि क्रीडन् सन् भुजैः नदीं रुरोध तदा रावणोपि दिग्विजयं कृत्वा तत्तीरे अर्चां कुर्वन् जलैः प्ला
वितं स्वशिबिरं आलक्ष्य तद्वीर्यं नसेहे क्रीडंतं तमभिभवितुं प्रवृत्तः तदा स्त्रीणां समक्षं रावणं धृत्वा माहिष्मत्यां निरुद्धः पुनः अ
वज्ञया मुक्तः अथ एकदार्जुनः मृगयां विचरन् जमदग्नेः आश्रमं अगमत् जमदग्निः कामधेन्वा ससैन्यस्य तस्य आतिथ्यं चक्रे
राजा आत्मैश्वर्यादधिकं कामधेनोः सामर्थ्यं दृष्ट्वा तदर्हणं नाद्रियत यतः धेन्वा साभिलाषः ततः अर्जुनेन चोदिताः दूताः सवत्सां
क्रंदंतीं धेनुं बलात् माहिष्मतीं निन्युः अथ राजनि गते सति रामः आश्रमं एत्य तस्य तत् दौरात्म्यं श्रुत्वा अहिरिव चुक्रोध ततः घो
रं परशुं सतूणं चापं चर्म च आदाय अर्जुनं अन्वधावत् राजा आपतंतं रामं वीक्ष्य सप्तदश अक्षौहिणीः सेनाः अचोदयत् ताः भग
वान् रामः एक एव असूदयत् अर्जुनः स्वसैन्यं हतं दृष्ट्वा स्वयं पंचशतेषु धनुष्षु बाणान् युगपत्संदधे तदा रामः इषुभिः तानि धनूं-
षि चिच्छेद पुनः अर्जुनः स्वहस्तैः मृधे अचलान् वृक्षांश्च उत्क्षिप्य वेगेन रामं अधावत ततो रामः कुठारेण तद्भुजान् शिरश्च चिच्छेद
सहस्रार्जुने मृते सति अयुतं तत्पुत्राः भयात् दुद्रुवुः रामः सवत्सां धेनुं गृहीत्वा आश्रमं एत्य पित्रे तां दत्वा कृतं कर्म कथयामास तदा जमदग्निः
अभाषत भवान् पापं अकार्षीत् सर्वदेवमयं राजानं वृथा अवधीत् वयं ब्राह्मणाः क्षमया पूज्यतां गताः क्षमिणां भगवान् आशु तुष्य-

ति मूर्धावसिक्तस्यराज्ञः वधः ब्रह्मवधादपिमहान् अतः त्वंअच्युतेचित्तंनिधायतीर्थसंसेवया अघंजहि ४१ इतिनवमेपंचदशः
१५ श्रीशुकउवाच रामःपित्राज्ञयासंवत्सरंतीर्थयात्रांचरित्वाआश्रमंआव्रजत् कदाचित् रेणुकाजलार्थंगंगांगता तत्रअ
प्सरोभिः क्रीडंतंचित्ररथंदृष्ट्वा किंचित् गंधर्वेस्पृहावतीसती होमवेलांनसस्मार ततः कालात्ययंज्ञात्वामुनेः शापशंकितासतीतं
आगत्यकलशंअग्रेनिधाय कृतांजलिः तस्थौ तदामुनिः तस्याः मानसंव्यभिचारं ज्ञात्वाकुपितःसन् आह हेपुत्रकाः पापांएनांघ्न
त एवमुक्तास्तेवधंनचक्रुः तदारामः मुनेः प्रभावज्ञः पित्रासंचोदितः सन् मात्रासह भ्रातॄन् अवधीत् तदाप्रसन्नः जमदग्निः वरेण
छादयामास रामोपिनिहतानांजीवितंवव्रे अस्मृतिंचवव्रे तदातेनिद्रापायेइवकुशलिनः उत्तस्थुः रामःपितुः तपोवीर्यंविद्वा
न् सुहृद्वधंचक्रे अथये अर्जुनस्यदशसहस्रंपुत्राः पितुर्वधंस्मरंतः शर्मनलेभिरे एकदाआश्रमतो रामेवनंगतेसति वैरंसाध
यंतः संतःआश्रमंएत्यहोमशालायांसमाधिस्थंमुनिंदृष्ट्वाजघ्नुः तदा राममात्रा याच्यमाना अपिशिरउत्कृत्यनिन्युः तदाशोका
र्तारेणुकारामरामेति चुक्रोश रामः तत् श्रुत्वाआश्रमंएत्यपितरंहतंददृशे तदाशोकमोहितःरामः किंचिद्विलप्यपितुर्देहं भ्रातृ
षुनिधायपरशुंगृहीत्वा क्षत्रांतायमनोदधे ततः माहिष्मतींपुरींगत्वातेषां शीर्षभिः महागिरिंचक्रे तद्रक्तेन घोरांनदींचक्रे पि
तृवधंहेतुंकृत्वा एकविंशतिवारंनिः क्षत्रांपृथ्वींकृत्वास्यमंतपंचके शोणितोदान् नवह्रदान् चक्रे शिरः आदायपितुः कायेनिधाय-
सर्वदेवमयंआत्मानंमखैः अयजत् तदाहोत्रे प्राचींददौ ब्रह्मणेदक्षिणां अध्वर्यवेप्रतीचीम् उद्गात्रेउत्तराम् अन्येभ्योविदिशः
कश्यपायमध्यमाम् उपद्रष्ट्रे आर्यावर्तंददौ ततः सरस्वत्यांअवभृथस्नानेन गतपापः सन् अंशुमानिवरेजे जमदग्निः देहंलब्ध्वा 
ऋषीणांमंडले रामपूजितः सप्तमः अभवत् रामोपि आगामिनिमन्वंतरे वेदप्रवर्तको भविष्यति अद्यापिसिद्धगंधर्वचारणैःगीयमा-

औ॰ १ सप्तर्षिषु एकतमःस्यादित्यर्थः,

न्चरितः आस्ते एवं श्रीहरिः भृगुषु अवतीर्य भुवः भारं अहरत् अथ गाधेः महातेजः विश्वामित्रो भूत् यः तपसा क्षत्रं हित्वा ब्रह्मवर्चसं लेभे यस्य एकशतं पुत्राः आसन् अन्यश्च योवै हरिश्चंद्रमखे देवैः संरक्षितः तं शुनःशेपं विश्वामित्रः पुत्रत्वेन स्वीकृत्य सुतानाह अयं ज्येष्ठत्वे प्रकल्प्यताम् ये ज्येष्ठाः ५० न मेनिरे क्रुद्धः मुनिः म्लेंच्छा भवत इति तान् अशपत् ततः कनिष्ठान् ५० आह अयं ज्येष्ठः कल्प्यताम् तदा ज्येष्ठं चक्रुः तदा विश्वामित्रः पुत्रवंतो भविष्यथेति तान् आशीः ददौ एवं कौशिकगोत्रं विश्वामित्रगोत्रं पृथग्विधं कृतं प्रवरांतरं च आपन्नं तथा अन्ये च विश्वामित्रस्य सुताः अष्टकादयः आसन् ३७ इति नवमे षोडशः १६ श्रीशुक उवाच यः पुरूरवसः पुत्रः आयुः तस्य पंच पुत्राः अभवन् नहुषः १ क्षत्रवृद्धः २ रजिः ३ रंभः ४ अनेनाः ५ इति क्षत्रवृद्धस्य सुहोत्रः तस्य पुत्राः ३ काश्यः १ कुशः २ गृत्समदः ३ गृत्समदात् शुनकः तस्य शौनकः अभवत् काश्यात् काशिः त० राष्ट्रः त० दीर्घतमाः त० धन्वंतरिः यः वासुदेवांशः आयुर्वेदप्रवर्तकः त० केतुमान् त० भीमरथः त० दिवोदासः त० द्युमान् स एव प्रतर्दनः शत्रुजित् ऋतध्वजः कुवलयाश्व इति नामचतुष्टयेन उक्तः तस्य अलर्कादयः षष्टिवर्षसहस्राणि षष्टिवर्षशतानि च मेदिनीं बुभुजे अलर्कस्य संततिः पुत्रः त० सुनीथः त० सुकेतनः त० धर्मकेतुः तस्य सत्यकेतुः त० धृष्टकेतुः तस्य सुकुमारः त० वीतिहोत्रः त० भर्गः त० भार्गभूमिः इमे काश्यः भूपाः क्षत्रवृद्धान्वयिनः अथ आयुपुत्रस्य रंभस्य रभसो जातः त० गंभीरः त० अक्रियः तत्क्षेत्रे ब्रह्म जज्ञे आयुपुत्रस्य अनेनसः शुद्धो जातः त० शुचिः त० त्रिककुत् त० धर्मसारथिः त० शांतरयः त० वंशोन आयुपुत्रस्य रजेः पंचशतं पुत्राः बभूवुः यः रजिः देवैः प्रार्थितः दैत्यान् हत्वा महेंद्राय पदं ददौ इंद्रः तस्मै पुनः दिवं दत्वा तन्मत्वा तच्चरणौ धृत्वा प्रह्लादाद्यरिशंकितः आत्मानमपि अर्पयामास पितर्युपरते सति पुत्राः याचमाना यइंद्राय स्वर्गं न ददुः तदा गुरुणा भिचारविधानेन अग्नौ हूयमाने सति इंद्रः रजेः पुत्रान वधीत् न कश्चिदवशिष्टः सुहोत्रपुत्रस्य कुश-

स्यप्रतिः पुत्रः त॰ संजयः त॰ जयः त॰ वृत्तः त॰ हर्यवनः त॰ सहदेवः त॰ अहीनः त॰ जयसेनः त॰ संकृतिः त॰ जयः त॰ क्षत्रधर्मा इति अथ नहु
षवंशं शृणु १८ इति नवमे सप्तदशः १७ श्रीशुक उवाच यतिः ययातिः संयातिः आयतिः वियतिः कृतिः इति षड् नहुषपुत्रा
बभूवुः यतिः पित्रा दत्तं राज्यं नैच्छत् यतिः तत्परिणामवित् नहुषे पितरि इंद्राण्या धर्षणात् द्विजैः स्थानाद्भ्रंशिते अजगरत्वं प्रापिते सति
पश्चात् ययातिः नृपः अभवत् सः चतुर्दिक्षु कनिष्ठभ्रातॄन् आदिशत् ततः काव्यस्य वृषपर्वणश्च कन्याभ्यां कृतदारः सन् उर्वीं जुगो-
प राजोवाच ब्रह्मर्षिर्भगवान् काव्यः ययातिस्तु क्षत्रियः एवं सति अनयोः प्रतिलोमजो विवाहः कथं तत्कथ्यताम् श्रीशुक
उवाच, एकदा दानवेंद्रस्य शर्मिष्ठानाम कन्या सहस्रसखीभिः युता देवयान्या सह पुरोद्याने विजहार ताः तीरे दुकूलानि विन्यस्य
जलाशये विजह्रुः तदा देव्या सह वृषस्थितं व्रजंतं शिवं वीक्ष्य व्रीडिताः सत्यः सरसः उत्तीर्य वासांसि पर्यधुः तदा अजानती शर्मिष्ठा
गुरुपुत्र्याः वासः स्वीयं मत्वा पर्यधात् तदा कुपिता देवयानी इदं अब्रवीत् अहो अस्याः दास्याः अयोग्यं कर्म निरीक्ष्यताम् अस्मद्धार्यं धृ
तवती शुनी वह विरध्वरे अहो वयं ब्राह्मणाः परमात्मनः मुखम् यान् देवाः हरिरपि स्तुवते तत्रापि मत्पितुः शिष्यस्य त्वं कन्या शूद्रः वे
दमिव असती त्वं अस्मद्धार्यं कथं धृतवती एवं शपंतीं गुरुपुत्रीं क्रुद्धा शर्मिष्ठा अभाषत हे भिक्षुकि आत्मवृत्तं अज्ञाय किं बहु कत्थ-
से अस्माकं किं न प्रतीक्षसे बलिभुजो यथा एवंविधैः दुष्टवाक्यैः गुरुपुत्रीं निंद्य वासः आदाय देवयानीं कूपे प्रक्षिप्य स्वगृहे अगात्
तस्यां गतायां ययातिः मृगयां चरन् यदृच्छया तत्र प्राप्य जलार्थी सन् कूपे तां नग्नां दृष्ट्वा तस्यै स्वं उत्तरं वासो दत्वा पाणिना गृहीत्वा-
कूपात्तां उज्जहार देवयानी तं आह हे राजन् त्वया मे पाणिः गृहीतः अतः मया त्वं वृतः एषः ईशकृतः संबंधः कचस्य शापात् मंत्राह्मणः १२

ओ॰१ बृहस्पतेः सुतः कचः शुक्रात् मृतसंजीवनीं विद्यां अध्यगात् तदा च देवयानी तं पतिं चकमे स च गुरुपुत्री मम पूज्येति नताम् उदवहत् ततश्च कुपिता सती तवेयं विद्या निष्फला भवत्विति शशाप स च न
वब्राह्मणः पतिर्भवेदिति तां शशाप॰

पतिर्न भविता ययातिः अशास्त्रीयमपि दैव प्रापितं बुध्वा तस्याः वचो जग्राह अथ राजनि गते सति देवयानी सर्वं शर्मिष्ठाकृतं स्वकृतं च पित्रे न्यवेदयत् तदा शुक्रः पौरोहित्यं निंदन् उंच्छवृत्तिं स्तुवन् दुहित्रा सह पुरात् निर्ययौ वृषपर्वा गुरुं मूर्ध्ना प्रसादयामास क्षणाधमन्युः शुक्रः शिष्यं आह कन्यायाः इच्छा क्रियताम् तथेत्युक्ते सति देवयानी प्राह अहं पित्रा दत्ता यतः यास्ये तत्र शर्मिष्ठा सखी सहिता मां अनुयातु तदा वृषपर्वा स्वानां संकटं वीक्ष्य कन्यां ददौ शर्मिष्ठा स्त्रीसहस्रेण देवयानीं पर्यचरत् ततः शुक्रः कन्यां ययातये दत्वा आह हे राजन् शर्मिष्ठां तल्पे मा धाः कदाचित् शर्मिष्ठा देवयानीं सप्रजां दृष्ट्वा रहसि तमेव पतिं वव्रे शर्मिष्ठया अपत्यार्थं याचितः ययातिः धर्मं अवेक्ष्य शुक्रवचः स्मरन् दैवप्राप्तसंगं अमन्यत ततो देवयानी यदुं तुर्वसुं प्रासूत शर्मिष्ठा द्रुह्युं अनुं पूरुं च व्यजायत शर्मिष्ठायाः भर्तुः सकाशात् गर्भसंभवं विज्ञाय देवयानी पितुर्गेहं ययौ ययातिः कामी सन् प्रियां अनुगतः प्रसादयितुं न शेके तदा शुक्रः क्रुद्धः सन् आह हे अनृत पूरुष त्वां जरा विशताम् ययातिरुवाच हे ब्रह्मन् ते दुहितरि अहं अतृप्तः तदा शुक्रः उवाच यः अभितः धारयिष्यति तस्य वयसा यथेच्छं जराविपर्यासं यातु इति लब्धव्यवस्थानः राजा ज्येष्ठं यदुं अयाचत हे पुत्र इमां जरां प्रतीच्छ निजं वयः देहि यदुरुवाच हे तात अहं जरया स्थातुं नोत्सहे एवमेव तुर्वसुः द्रुह्युः अनुश्च ऊचुः तदा राजा पूरुं उवाच हे वत्स अग्रजवत् प्रत्याख्यातुं त्वं नार्हसि पूरुरुवाच हे तात पितुः राज्ञां लोके को न मन्येत यत्प्रसादात् परं विंदति उत्तमश्चिंतितं कुर्यात् प्रोक्तकारी च मध्यमः अश्रद्धया यः कुर्यात् सः अधमः अकर्ता पुरीषसमः इत्युक्त्वा जरां जगृहे ययातिरपि तद्वयसा अग्निवत् प्रजाः पालयन् विषयान् बुभुजे अनेकैः ऋतुभिः सर्वदेवमयं हरिं निष्कामतया अयजत् एवं वर्षसहस्राणि सार्वभौमः कदिंद्रियैः विषयान् भुंजानोपि नातृप्यत् ५१ इति नवमे अष्टादशः १८ श्रीशुक उवाच सः

इत्थं स्त्रैणः सन् कामान् आचरन् आत्मनाशं बुध्वा निर्विण्णः सन् प्रियायै एतां गाथां अगायत हे भार्गवि मद्विधाचरितां अमुं गा-
थां शृणु कश्चिदेकः बस्तः वने विचरन् कूपे पतितां अजां ददर्श कामी बस्तः तस्याः उद्धरणोपायं अचिंतयत् ततः विषाणाग्रेण कू-
पतटं उद्धृत्य तामुज्जहार सा कूपात् उत्तार्य तमेव पतिं चकमे तया वृतं वीक्ष्य अन्याः अजाः वव्रुः सः अजः सर्वाभिः सह रेमे कूपस-
ल्लग्ना अजा अन्यया सह रमंतं दृष्ट्वा तमुत्सृज्य दुःखिता सती स्वामिनं ययौ सोऽपि स्त्रैणः तदनुगतः सन् इडविडाकारं शब्दं कुर्व-
न् तां प्रसादयितुं नाशक्नोत् तत्र कश्चित् अजास्वामी द्विजः तं दूषणं अच्छिनत् पुनः लंबंतं वृषणं तं योगवित् अर्थाय संदधे सो-
पि कूपलब्धया अजया बहुकालं रेमे अद्यापि न तुष्यति हे देवयानि तथा अहं भवत्याः प्रेमयंत्रितः तव मायया मोहितः आत्मा-
नं न जानामि तर्हि पुनरपि बहवो विषयाः सेव्यंतां ततो मनसि प्रीते कामोपशांत्या मोहो निवर्तेत इति चेत् तर्हि शृणु यत् पृथिव्यां व्री-
हि यवं हिरण्यं पशवः स्त्रियः इदं सर्वं कामहतस्य पुंसः मनः प्रीतिं न पूरयति न जातु कामः कामानां उपभोगेन शाम्यति हविषा
कृष्णवर्त्मेव भूय एवाभिवर्द्धते इति यदा तु पुंसः समदृष्टित्वं तदा सर्वाः दिशः सुखमयाः भवंति या तृष्णा स्वयं जीर्यतः सतः न-
जीर्यते तां दुःखप्रदां तृष्णां शर्मकामः द्रुतं त्यजेत् स्त्रीसन्निधानं तु सर्वथा त्याज्यम् मात्रा स्वस्रा दुहित्रा वा नाविविक्तासनो-
भवेत् बलवानिंद्रियग्रामो विद्वांसमपकर्षति एवं पूर्णं वर्षसहस्रं असकृत् विषयान् सेवतः मम तृष्णा विषयेषु पुनर्जायते अ-
तः एतां त्यक्त्वा ब्रह्मणि मन आधाय अहं निर्द्वंद्वः निरहंकारश्च सन् मृगैः सह चरिष्यामि ययातिः इति जायां उक्त्वा पूरवे तदीयं
वयः दत्वा स्वां जरां आददे ततः चतुर्दिक्षु द्रुह्युं यदुं तुर्वसुं अनून् निवेश्य पूरुं सार्वभौमपदे अभिषिच्य तस्य वशे अग्रजान् स्था- १२
प्य वनं ययौ सः विषयेषु मुक्तसंगः सन् वासुदेवे भक्तिं कुर्वन् भगवद्भक्तिं लेभे ततः देवयानी तां गाथां श्रुत्वा परिहासमिव मत्वा-

ओ॰ ५ जरया भोगासमर्थं अकरोत्, ओ॰ ५ स्वपुत्र्याः कामोपभोगाय॰

राजनिगतेसति इदंसर्वं भगवन्मायारचितं ज्ञात्वा सर्वत्र संगंत्यक्त्वा नमनादिभिः कृष्णेमनःस्थाप्य आत्मनःलिंगंव्यधुनोत् २९ इ
तिनवमेएकोनविंशः १९ श्रीशुकउवाच पूरोर्वंशंप्रवक्ष्यामिहेनृपयत्रत्वंजातोसि हेभारतयत्रराजर्षयः ब्रह्मवंश्याश्च
जज्ञिरे पूरुपुत्रःजन्मेजयः त० प्रचिन्वान् त० प्रवीरः त० नमस्युः त० चारुपदः त० सुद्युः त० बहुगवः त० संयातिः त० अहंयातिः त० रौ
द्राश्वः त० घृताच्यांअप्सरसि दशपुत्राबभूवुः तेच ऋतेयुः १ कुक्षेयुः २ स्थंडिलेयुः ३ कृतेयुः ४ जलेयुः ५ संततेयुः ६ धर्मेयुः ७
सत्येयुः ८ व्रतेयुः ९ वनेयुः १० ऋतेयोःपुत्रः रंतिभारः तस्यपुत्राः ३ सुमतिः १ ध्रुवः २ अप्रतिरथः ३ अप्रतिरथस्यकण्वः
ऋषिः त० मेधातिथिः तस्मात् प्रस्कण्वाद्याःद्विजातयः सुमतेःपुत्रः रैभ्यः त० दुष्यंतः सःकदाचित् मृगयांयातः सन् कण्वाश्रमं
गतः तत्रआसीनांस्वप्रभयामंडयंतीं रमामिवस्त्रियंदृष्ट्वामुमुहे तद्दर्शनप्रमुदितः कामसंतप्तः तांबभाषे हेकमलपत्राक्षि
त्वंकाकस्यासि निर्जनेवने तवकिंचिकीर्षितं अस्ति त्वांराजन्यतनयामितिनिश्चयेन अहंवेद्मि कुतःपौरवाणांचेतः अधर्मे
क्वचिदपिनहिरमते शकुंतलोवाच अहंविश्वामित्रात्मजा मेनकायांजाता स्वर्गंगच्छंत्या तया अत्रवनेत्यक्ता कण्वः
एतत्सर्वंवेद हेवीरतेकिंकरवाम अत्रास्यतांनः अर्हणंचगृह्यताम् अन्ननीवाराःसंति भुज्यताम् रोचतेचेत् उष्यताम्
दुष्यंतउवाच हेसुभ्रूः कुशिकान्वयेजातायाःतेइदंयोग्यम् राज्ञांकन्यास्तुस्वयंसदृशंवरंवृणुते तयाओमित्युक्तेसति
राजागांधर्वविधिना तांउपयेमे तदाअमोघवीर्यः राजर्षिःतस्यांवीर्यंआदधे श्वोभूतेस्वपुरंयातः साकालेनपुत्रंअसूत कण्वः
वनेकुमारस्यजातकादिसंस्कारान् चक्रे सःबालःमृगेंद्रान्बध्वाक्रीडंतिस्म शकुंतलापराक्रमिणंहरेरंशांशसंभवंपुत्रंआ-
दायभर्तुःसमीपंआगमत् राजाभार्यापुत्रौयदानजगृहे तदासर्वेषांशृण्वतां आकाशवाणी आह माताभस्त्रापितुःपुत्रः

ओ०१ आधारपात्रं

येनजातःसएवसः हेदुष्यंतपुत्रं भरस्व शकुंतलांमावमंस्थाः किंच पुत्रः नरकात् पितरं त्रायति अस्यत्वंधाता शकुंतलासत्यं
आह इत्युक्तेततः भार्यापुत्रौस्वीकृतवान् ततोदुष्यंतेकालेनउपरतेसति सःभरतः चक्रवर्तीबभूव यस्यदक्षिणहस्तेचक्रचिन्हं
पादयोः कमलचिन्हंसः भरतःएकदा सामंतेयं पुरोहितं कृत्वा गंगातीरे यमुनातीरेच पंच पंचाशताश्वमेधैः ईजे अष्टसप्ततिमेध्या
न् अश्वान् बबंध दौष्यंतेः भरतस्यप्रकृष्टगुणवति देशेचितः अग्निःअभूत् यस्मिन् अग्निचयने सहस्रंब्राह्मणाः भरतेनदत्ताः
गाः प्रत्येकं बद्वं बद्वंविभज्यजगृहुः ततश्चभरतः नृपान् विस्मापयन् सन् त्रयस्त्रिंशच्छतं अश्वान् बध्वादेवानांवैभवं अत्यगा
त् ततश्च मष्णारारव्ये कर्मणितीर्थेवाचतुर्दशनियुतानिगजान् अदात् अथ भरतःदिग्विजये अब्रह्मण्यान् नृपान् किराता
दीन् अहनत् पुरा असुरैः हृता देवस्त्रियः असुरान् हत्वा देवेभ्यः ददौ सप्तविंशतिसहस्रं वत्सरान् राज्यंच चक्रे सः राज्यंदेहं
च मृषेतिविचार्यउपरराम तस्यतिस्रःस्त्रियः आसन् ताः भर्त्राएते कृतानानुरूपांइत्युक्तेसति व्यभिचार शंकयाः स्मान्त्य
क्ष्यतीति भयात् पुत्रान् जघ्नुः तदावंशेवितथेसति पुत्रार्थंमरुत् स्तोमेनयागेन यजतः भरतः भरतस्यमरुतः भरद्वाजंनाम
पुत्रंददुः तदुत्पत्तिमाह गर्भिण्यांभ्रातुः उतथ्यस्य पत्न्याममतायां चौर्येण मैथुनाय प्रवृत्तो बृहस्पतिः तदागर्भस्थेन निवारितः
तदाक्रुद्धो बृहस्पतिः अंधोभवेति गर्भंशस्वाबलात् वीर्यंन्यषिंचत् ततोबृहस्पतेः शापात् गर्भस्थोदीर्घतमाः अंधोबभू
व तेनचतद्वीर्यं पार्ष्णिनायोनेः बहिःनिःसारितंभूमौपतितंसः सद्यएवकुमारः अभवत् तत्रपुत्रंत्यक्त्वायांतींममतां बृहस्प
तिः आह हेमूढे इमंपुत्रंभर एकस्यक्षेत्रे अन्यस्यबीजादिति द्वाभ्यांजातम् अतःतस्याप्ययंपुत्रः एवंउक्ताममतातं आह हेबृहस्प १४
तेत्वंइमंभर यतः द्वाभ्यां आवाभ्यां अन्यायतोजातं अतोनाहंएकाकिनी भरामि एवमुक्त्वाविवदमानौतौ पुत्रंत्यक्त्वायातौ

ओ॰५ चतुराशीत्यधिकैः त्रयोदश सहस्रैः एकंबद्वं एवं.१३०८४०००,

ततोहेतोः अयंभरद्वाजः तंमरुतः अबिभ्रन् एवंमरुद्भिः प्राप्तोयंभरतान्वये व्यर्थे सति दत्तः अतः वितथोजातः ३८ इतिनव
मेविंशः२० श्रीशुकउवाच वितथस्यसुतः मन्युः तस्यपुत्राः ५ तेच बृहत्क्षत्रः १ जयः २ महावीर्यः ३ नरः ४ गर्गः ५ इति
नरात् संकृतिः त॰ गुरुः त॰ रंतिदेवश्च रंतिदेवस्ययशः इहामुत्रगीयते तस्यदैवात् लब्धंबुभुक्षतः निष्किंचनस्य धीरस्यसकु-
टुंबस्यसीदतः लब्धंलब्धंददतः एवंवर्तमानस्यसतः अष्टचत्वारिंशत् दिनानि व्यतीयुः तदा घृतं पायसं संयावं तोयंच प्रातः प्रा
प्तम् कृच्छ्रप्राप्तकुटुंबस्य क्षुत्तृड्भ्यांजातवेपथोः भोक्तुकामस्यतस्यकाले ब्राह्मणः अतिथिः आगमत् सः सर्वत्रहरिंपश्यन् त
स्मैश्रद्धया अन्नंददौ सः द्विजः भुक्त्वाययौ अवशिष्टमन्नं कुटुंबायविभज्य भोक्तुकामस्य सतः अन्यः वृषलः अतिथिः आगम
त् राजातस्मै अन्नंददौ शूद्रेयातेश्वभिरावृतः अतिथिः तं अगात् हेराजन् सगणायक्षुधार्तायमेअन्नंदीयताम् तदाराजातंबहुमा
न पुरःसरं श्वभ्यश्च शेषंअन्नंदत्वानमश्चक्रे ततःएकतृप्तिः करंजलं अवशिष्टं तत् पास्यतः पुल्कसः आगत्य अशुभस्यमे अ-
पः देहीति अयाचत तस्यतांदीनांवाचं निशम्य कृपयापीडितः इदंआह अहंईश्वरात् गतिंमोक्षंच नकामये किंतु अखिलदेह
भाजां अंतः स्थितः सन् तेषां आर्तिंकामये येनते अदुःखाः भवंति इत्यादि प्रभाष्य स्वयंपिपासयाम्रियमाणोपितस्मै जलंद
दौ तदाब्रह्माविष्णुमहेशाः आत्मानंदर्शयांचक्रुः सः तेभ्यः नमस्कृत्य निः संगः सन् वासुदेवे भक्त्या नमश्चक्रे एवंईश्वरालंबनं
चित्तंकुर्वतः तस्यमायास्वप्नवत् प्रत्यलीयत तत्प्रसंगानुभावेन सर्वेजनाः नारायणपराः अभवन् अथगर्गस्यमन्युसुतस्यवंश
माह गर्गात् शिनिः तस्मात् गार्ग्यप्रभृतिद्विजाः महावीर्यस्यवंशमाह महावीर्यस्यदुरितक्षयः तस्यत्रय्यारुणिः कविः पुष्करा
रुणिः एतेद्विजत्वंप्राप्ताः अथबृहत्क्षत्रस्यपुत्रः हस्ती येनहस्तिनापुरंकृतम् त॰ त्रयः अजमीढः द्विमीढः पुरुमीढइति अज-

मीढस्यप्रियमेधादयोद्विजाः अजमीढादेव अन्यःपुत्रःबृहदिषुः त० बृहद्धनुः त० बृहत्कायः तस्यजयद्रथः त०विशदः त०सेन
जित् त०पुत्राः ४ रुचिराश्वः १ दृढहनुः २ काश्यः ३ वत्सः ४ रुचिराश्वात् पारः त०पुत्रौद्वौ पृथुसेनः नीपइति नीपस्यपुत्रशतंब
भूत् सएवनीपः शुककन्यायांकृत्व्यांब्रह्मदत्तंसुतंप्रासूत सःब्रह्मदत्तःसरस्वत्यांभार्यायांविष्वक्सेनंपुत्रंअधात् सएवब्र
ह्मदत्तः जैगीषव्योपदेशेनयोगतंत्रंचकार विष्वक्सेनात् उदक्स्वनः तस्यभल्लादः एतेबार्हदीषवाः अथद्विमीढात् यवीन-
रः त० कृतिमान् त०सत्यधृतिः तस्यदृढनेमिः तस्यसुपार्श्वः तस्यसुमतिः तस्यसन्नतिमान् तस्यकृतीसःहिरण्यनाभात्
योगंप्राप्य प्राच्यसाम्नांषट्संहिताः विभज्यशिष्यान् अध्यापितवान् तस्यनीपः त०उग्रायुधः त० क्षेम्यः त० सुवीरः तस्य
रिपुंजयः त० बहुरथः अथपुरुमीढः अप्रजः अजमीढस्य वंशांतरमाह अजमीढात् नलिन्यांनीलः त० शांतिः त० सुशांतिः
त० पुरुजः त० अर्कः तस्यभर्म्याश्वः त०पुत्राःपंचमुद्गलः यवीनरः बृहदिषुः कांपिल्यःसंजयः इमेपंचालसंज्ञकाः आसन् मु
द्गलात् ब्रह्मजातं तत् गोत्रंमुद्गलाख्यंजातम् मुद्गलात् मिथुनं तत्रदिवोदासः पुमान् अहल्याकन्या तस्यांगौतमात् शतानं
दःजातः त० सत्यधृतिः त० शरद्वान् तस्मात् उर्वशीदर्शनात् शरस्तंबेरेतः अपतत् तस्मात् रेतसः मिथुनंजातम् तन्मिथुनं
दृष्ट्वाशंतनुः मृगयांचरन् कृपयाजग्राह तत्रपुमान् कृपः कन्याकृपी साद्रोणपत्नीआसीत् ३६ इतिनवमेएकविंशः २१
श्रीशुकउवाच दिवोदासात् मित्रेयुः तस्मात्च्यवनः त० सुदासः त० सहदेवः त० सोमकः त० पुत्रशतंबभूव ते
षुजंतुःज्येष्ठः पृषतः कनिष्ठः पृषदात् द्रुपदः त० द्रौपदीकन्याधृष्टद्युम्नादयःसुताः धृष्टद्युम्नात् धृष्टकेतुः इमेपांचालसंज्ञकाः १५

ओ・३ यद्यपिशुकः उत्पत्त्यैवविमुक्तसंगोनिर्गतः तथापिविरहातुरं व्यासमनुयांतंदृष्ट्वाछायाशुकंनिर्माययगतवान् तदभिप्रायेणैवगार्हस्थ्यादिव्यवहारः

अजमीढस्य वंशांतरमाह अजमीढात् ऋक्षः त॰ संवरणः त॰ तपत्यां सूर्यकन्यायां कुरुक्षेत्रपतिः कुरुः तस्य पुत्राः चत्वारः परी-
क्षित् १ सुधनुः २ जन्हुः ३ निषधाश्च इति ४ सुधनुषः सुहोत्रः त॰ च्यवनः त॰ कृती त॰ उपरिचरो वसुः त॰ बृहद्रथः १ कुशांबुः २ म
त्स्यः ३ प्रत्यग्रः ४ चेदिपाद्याः पुत्राः चेदिपसंज्ञाः बृहद्रथात् कुशाग्रः त॰ ऋषभः त॰ पुष्पवान् त॰ सत्यहितः त॰ जहुः बृहद्रथाद्
वान्यभार्यायां द्वे शकले जाते तेमात्रा बहिरुत्सृष्टे जीव जीवेति क्रीडंत्या जरया चाभिसंधिते सः जरासंधः त॰ सहदेवः त॰ सोमापिः
त॰ श्रुतश्रवाः कुरुपुत्रोयः परीक्षित् सः अनपत्यः कुरुपुत्रस्य जन्होः सुरथः त॰ विदूरथः त॰ सार्वभौमः त॰ जयसेनः त॰ राधिकः त॰
अयुतः त॰ क्रोधनः त॰ देवातिथिः त॰ ऋष्यः त॰ दिलीपः त॰ प्रतीपः त॰ पुत्राः त्रयः देवापिः १ शंतनुः २ बाल्हिक इति ३ तत्र देवापिः पितृरा-
ज्यं त्यक्त्वा दिवं गतः ततः शंतनुः राजा अभवत् सः कराभ्यां यंयं जीर्णं स्पृशति सः यौवनं एति तद्राज्ये यदा द्वादश समाः देवो न व
वर्ष तदा शंतनुः तत्कारणं विप्रान् पृष्टवान् तैः त्वं परिवेत्ता अतः तद्दोषपरिहारार्थं आशु अग्रजाय राज्यं देहि ततो वृष्टिः स्यात् ए
वमुक्त्वा शंतनुः वनं गत्वा ज्येष्ठं छंदयामास शंतनुगमनात् पूर्वमेव अश्मराव संज्ञेन मंत्रिणा देवापिं पाखंडीकृत्य राज्यानर्हं क
र्तुं ये प्रहिताः विप्राः तैः वेदात् भ्रंशितः सन् वेदनिंदापरः अभवत् ततः तस्य पातित्येन राज्यानर्हत्वे जाते शंतनोः दोषाभावात्
देवो ववर्ष देवापिः योगं आस्थाय कलापग्रामे आस्ते॰ सः कलौ सोमवंशे नष्टे कृतादौ स्थापयिष्यति बाल्हीकात् सोमदत्तः त॰
पुत्राः ३ भूरिः १ भूरिश्रवाः २ शलश्चेति ३ शंतनोः गंगायां भीष्मः आसीत् येन जामदग्न्योपि युधि तोषितः शंतनोः दासकन्या
यां सत्यवत्यां चित्रांगदः विचित्रवीर्यश्च जज्ञे तत्र चित्रांगदः तन्नामक गंधर्वेण युद्धे हतः सत्यवत्यां शंतनुपरिग्रहात् पूर्वमेव पराशरा

टी॰ ५ राज्ञः प्रजापालनादिः परोधर्मः अतः त्वं राज्यं कुर्विति प्रार्थितवान्, टी॰ २ उपरिचरस्य वसोर्वीर्येण मत्स्यगर्भात् उत्पन्ना दासैः कैवर्तैः पालिता अतो दासकन्येति प्रसिद्धायाम्॰

तृ हरेः अंशोव्यासोजातः यतः अहंजातः सः पैलादीन् हत्वामह्यं पुत्राय इदं भागवतंजगौ विचित्रवीर्यः काशिराजसुते भीष्मेणस्वयं
वरात् आनीते अंबिकांबालिके उवाह तयोः आसक्तहृदयः सः यक्ष्मणामृतः अग्रजस्यतस्य भ्रातुः क्षेत्रे मात्रोक्तः व्यासः अंबिका
यांधृतराष्ट्रं अंबालिकायांपांडुं दास्यांविदुरंच अजीजनत् धृतराष्ट्रस्यगांधार्यांदुर्योधनप्रमुखंपुत्रशतं दुःशलाकन्याचजज्ञे व
नेमृगशापात् मैथुने प्रतिबद्धस्य पांडोः कुंत्यांधर्मानिलेंद्रेभ्योयुधिष्ठिरप्रमुखाः त्रयः माद्र्यांनासत्यदस्राभ्यांनकुलसहदेवौ-
द्रौपद्यांपंचभ्यः पंचपुत्राः तेपितरः अभवन् तत्रयुधिष्ठिरात् प्रतिविंध्यः भीमात् श्रुतसेनः अर्जुनात् श्रुतकीर्तिः नकुलात् शता
नीकः सहदेवात् श्रुतकर्मा तथाअन्यस्त्रीषुधर्मात् पौरव्यां देवकः भीमात् हिडिंबायांघटोत्कचः तथाकाल्यांसर्वगतः सहदे
वात् विजयायांसुहोत्रः नकुलात् करेणुमत्यांनिरमित्रः अर्जुनात् उलूप्यांनागकन्यायांइरावान् तथामणिपूरपतेः सुतायां
चित्रांगदायांपुत्रिकाधर्मेणदत्तायांबभ्रुवाहनः अतः अर्जुनपुत्रः सन्नपिमणिपूरपतेः सुतः अर्जुनात् सुभद्रायांते तातः अ
भिमन्युः तस्मात्त्वं द्रौणेः ब्रह्मास्त्रतेजसा क्षीणेषुकुरुषु कृष्णानुभावेन अंतकात् मोचितः तवपुत्राः ४ जनमेजयः १ श्रुतसेनः २ भी
मसेनः ३ उग्रसेनः ४ इतिजनमेजयः तक्षकात् त्वांनिधनंगतंश्रुत्वा सर्पसत्रंकरिष्यति ततः भुवंजित्वा कावषेयंतुरसंज्ञंपुरोहि-
तंकृत्वा अश्वमेधैः यक्ष्यति तस्यपुत्रः शतानीकः सः याज्ञवल्क्यशौनककृपेभ्यः त्रयींक्रियात्मनोः ज्ञानंक्रमतः एष्यति तस्य
सहस्रानीकः तस्यअश्वमेधकः त॰ असीमकृष्णः त॰ निमिचक्रः एतेभाव्याः निमिचक्रः तदागजाह्वये हृते सति कौशांब्यांव
त्स्यति त॰ उक्तसंज्ञः त॰ चित्ररथः त॰ कविरथः त॰ वृष्टिमान् त॰ सुषेणः त॰ सुनीथः त॰ नृचक्षुः त॰ सुखीनलः त॰ परिप्लवः त॰ सु
नयः त॰ मेधावी त॰ नृपंजयः त॰ दूर्वः त॰ तिमिः त॰ बृहद्रथः त॰ सुदास त॰ शतानीकः त॰ दुर्दमनः त॰ बहीनरः त॰ दंडपाणिः त॰ निमिः

त॰ क्षेमकः एवंप्राप्य पुरुवंशः संस्थांप्राप्स्यति अथभाव्याः मागधाराजानः तेवदामि बृहद्रथात् पूर्वोक्तात् जरासंधः त॰ स
हदेवः त॰ मार्जारिः त॰ श्रुतश्रवाः त॰ अयुतायुः त॰ निरमित्रः त॰ सुनक्षत्रः त॰ बृहत्सेनः तस्य कर्मजित् त॰ सृंजयः त॰ विप्रः त॰
शुचिः त॰ क्षेमः त॰ सुव्रतः त॰ धर्मसूत्रः त॰ शमः त॰ द्युमत्सेनः त॰ सुमतिः त॰ सुबलः त॰ सुनीथः त॰ सत्यजित् त॰ विश्वजि
त् त॰ रिपुंजयः भविष्यति एतेबार्हद्रथाः भूपालाः साहस्रसंवत्सरं भाव्याः ४८ इतिनवमेद्वाविंशः २२ श्रीशुकउ
वाच ययातिपुत्रस्य अनोः पुत्रः ३ सभानरः १ चक्षुः २ परोक्षः ३ इति सभानरात्कालनरः त॰ सृंजयः त॰ जनमेजयः
त॰ महामनाः त॰ उशीनरः तितिक्षुश्चद्वौपुत्रौ उशीनरस्यपुत्राः ४ शिबिः १ वनः २ शमिः ३ दक्षइति ४ शिबेः पुत्राः वृषद
र्भः १ सुवीरः २ मद्रः ३ कैकयः ४ इतिउशीनरबंधोः तितिक्षोः रुशद्रथः त॰ हेमः त॰ सुतपाः त॰ बलिः तत्क्षेत्रेदीर्घतमसः अं
गवंगकलिंगाद्याः सुह्मपुंड्रांध्रसंज्ञिताः पुत्राः एतेस्वनाम्नाषड्देशान् चक्रुः अंगात् खनपानः त॰ दिविरथः त॰ धर्मरथः
त॰ चित्ररथः सः अप्रजएवरोमपादइतिख्यातः तस्मैदशरथः शांतांस्वकन्यांददौ तांऋष्यशृंगः उवाह यंरामाः वृष्ट्यर्थंना
ट्यगीतादिभिः आनिन्युः सः हरिणीसुतः मरुत्वतः इष्टिंनिरूप्य चित्ररथाय प्रजांअदात् येनदशरथोपिप्रजाः लेभे रो-
मपादात् चतुरंगः त॰ पृथुलाक्षः तस्यपुत्राः ३ बृहद्रथः १ बृहत्कर्मा २ बृहद्भानुरिति ३ बृहद्रथात् बृहन्मनाः त॰ जयद्रथः
त॰ विजयः त॰ धृतिः त॰ धृतव्रतः त॰ सत्कर्मा त॰ अतिरथः यः गंगातटेक्रीडन् कुंत्यात्यक्तंमंजूषागतंकानीनंसुतं अकरोत् सः
कर्णः त॰ वृषसेनः द्रुह्योर्वंशंशृणु द्रुह्योः बभ्रुः त॰ सेतुः त॰ आरब्धः त॰ गांधारः त॰ धर्मः त॰ धृतः त॰ दुर्मनाः त॰ प्रचेताः त॰ शतंपु
त्राः म्लेंच्छपतयोबभूवुः अथतुर्वसोः वन्हिः त॰ गर्भः त॰ भानुमान् त॰ त्रिभानुः त॰ करंधमः त॰ मरुतः सः अपुत्रः सन् पौरवंदुष्यं

ओ॰ ५ ऋष्यशृंगः

तं अन्वभूत् सः दुष्यंतः पुनः स्वं पुरुवंशं राज्य कामुकः सन् भेजे ययाते ज्यैष्ठपुत्रस्य यदोर्वंशं नरर्षभ वर्णयामि महापुण्यं सर्वपा
पहरं नृणाम् यदोर्वंशं नरः श्रुत्वा सर्वपापैः प्रमुच्यते यत्रावतीर्णो भगवान् परमात्मा नराकृतिः यदोः पुत्राः चत्वारः सहस्रजित्
१ क्रोष्टा २ नलः ३ रिपुः ४ ज्येष्ठात् शतजित् तस्य पुत्राः ३ महाहयः १ वेणुहयः २ हैहयः ३ हैहयात् धर्मः १ त॰ नेत्रः त॰ कुंतिः त॰
सोहंजिः तस्य महिष्मान् त॰ भद्रसेनकः त॰ पुत्रौ २ दुर्मदः धनकश्चेति २ धनकस्य पुत्राः ४ कृतवीर्यः १ कृताग्निः २ कृतवर्मा ३
कृतौजाः ४ कृतवीर्यस्य सहस्रार्जुनः सप्तद्वीपेश्वरः अभवत् सः दत्तात्रेयात् योगसिद्धिं प्राप तस्य गतिं यज्ञादिभिः अन्ये नृपाः
नयास्यंति सः पंचाशीति सहस्राणि समाः राज्यं चकार तस्य पुत्र सहस्रेषु युद्धे पंच उर्वरिताः तेच जयध्वजः १ शूरसेनः २ वृष-
भः ३ मधुः ४ ऊर्जितः ५ जयध्वजात् तालजंघः तस्य पुत्र शतं तत् और्वतेजसा सगरेण उपसंहृतम् तत्र वीतिहोत्रो ज्येष्ठ अथ
मधोः वृष्णिज्येष्ठं पुत्रशतमासीत् यतः मधोः वृष्णेः यदोश्च हेतोः इदं कुलं तत्संज्ञम् यदुपुत्रस्य क्रोष्टोः वृजिनवान् त॰ श्वाहिः त॰
रुशेकुः त॰ चित्ररथः त॰ शशबिंदुः त॰ महाभोजः सः स्वस्य अयुतस्त्रीषु प्रत्येकं लक्षं लक्षं एवं पुत्राणां दशलक्षसहस्राणि अजन
यत् तत्र पृथुश्रवाः पृथुयशाः इत्यादयः षट् मुख्याः पृथुश्रवसः धर्मः त॰ उशनाः त॰ रुचकः त॰ पुत्राः ५ पुरुजित् १ रुक्मः २ रुक्मेषुः
३ पृथुः ४ ज्यामघश्चेति ५ ज्यामघः सः अप्रजः तस्य शैब्या स्त्री आसीत् सः एकदा शत्रुभवनात् भोज्यां कन्यां जहार रथस्थां
तां दृष्ट्वा शैब्या आह हे कुहक केयं मत्स्थानं रथं स्थापिता इति श्रुत्वा भयात् तव स्नुषा इत्याह सा स्मयंती सती पतिं आह अहं
वंध्या सपत्नी च स्नुषा मे युज्यते कथं तदा सः प्राह जनयिष्यसि यं राज्ञि तस्येयमुपयुज्यते अन्वमोदंत तद्विश्वेदेवाः पितर एव १७
च शैब्या गर्भमधात्काले कुमारं सुषुवे शुभम् स विदर्भ इति प्रोक्त उपयेमे स्नुषां सतीं भार्या वश्यास्तु ये केचिद्भविष्यंत्यथवा मृताः

तेषांतुज्यामघः श्रेष्ठः शैब्यापतिरभून्नृपः ३८ इतिनवमेचूर्णिकायांत्रयोविंशः २३ श्रीशुकउवाच विदर्भः तस्यां
कुशक्रथरोमपादान् त्रीन् पुत्रान् प्रासूत रोमपादस्य बभ्रुः त· कृतिः त· उशिकः त· चेदिः तस्मात् चैद्यादयः अथक्रथस्य कुंतिः
त· धृष्टिः त· निर्वृतिः त· दाशार्हः त· व्योमः त· जीमूतः त· विकृतिः त· भीमरथः त· नवरथः त· दशरथः त· शकुनिः त· करंभिः त· देवरा
तः त· देवक्षत्रः त· मधुः त· कुरुवशः त· अनुः त· पुरुहोत्रः त· आयुः त· सात्वतः त· पुत्राः ७ भजमानः १ भजिः २ दिव्यः ३ वृष्णिः ४ देवावृ
धः ५ अंधकः ६ महाभोजः ७ भजमानात् एकस्यांपुत्राः ३ निम्लोचिः १ किंकिणः २ वृष्णिः ३ तथाअन्यस्यांपुत्राः ३ शताजित् १
सहस्राजित् २ अयुताजित् ३ इति अथदेवावृधात् बभ्रुः सः मनुष्येषुश्रेष्ठः देवावृधश्चदेवैः समः तौभ्यां अष्टाधिकपंचषष्टिस
हस्रंपुरुषाः मोक्षंप्राप्ताः अथमहाभोजान्वये भोजाआसन् अथसात्वतपुत्रस्य वृष्णेः पुत्रौ २ सुमित्रः १ युधाजित् इति २ युधा-
जितः पुत्रौ २ शिनिः १ अनमित्रश्च २ अनमित्रात् निम्नः तस्यपुत्रौ २ सत्राजितः १ प्रसेनश्च २ अनमित्रसुतोन्यः शिनिः त· सत्य
कः त· युयुधानः त· जयः त· कुणिः त· युगंधरः अनमित्रस्य अपरः पुत्रः वृष्णिः तस्यपुत्रौ २ श्वफल्कः १ चित्ररथश्च २ श्वफल्कात्
गांदिन्यांत्रयोदशपुत्राः १३ अक्रूरः १ आसंगः २ सारमेयः ३ मृदुरः ४ मृदुवित् ५ गिरिः ६ धर्मवृद्धः ७ सुकर्मा ८ क्षत्रोपेक्षः ९ अरिम-
र्दनः १० शत्रुघ्नः ११ गंधमादः १२ प्रतिबाहुः १३ सुचीराख्यातेषांस्वसास्ति अक्रूरस्यपुत्रौ २ देववान् १ उपदेवश्च २ श्वफल्कबंधोः चि
त्ररथस्य पृथुः एकः अन्येविदूरथाद्याः बहवः संति सात्वतपुत्रात् अंधकात् पुत्राः ४ कुकुरः १ भजमानः २ शुचिः ३ कंबलबर्हिः ४
कुकुरस्यवह्निः त· विलोमा त· कपोतरोमा त· अनुः त· अंधकः त· दुंदुभिः तस्य अरिद्योतः त· पुनर्वसुः तस्यआहुकः आहुकीकन्याच
आहुकस्यपुत्रौ देवकः १ उग्रसेनः २ देवकात्मजाः ४ देववान् १ उपदेवः २ सुदेवः ३ देववर्द्धनः ४ तेषांभगिन्यः ७ धृतदेवा १ शांतिदेवा २ उपदे
श्री·६ तदुपदेशेन·

वा ३ श्रीदेवा ४ देवरक्षिता ५ सहदेवा ६ देवकी ७ एताःवसुदेवःउवाह उग्रसेनस्यपुत्राः९ कंसः१ सुनामा २ न्यग्रोधः३ कंकः४ शंकुः५
सुहूः६ राष्ट्रपालः७ सृष्टिः८ तुष्टिमान् ९ एषांभगिन्यः५ कंसा १ कंसवती २ कंका ३ शूरभूः ४ राष्ट्रपालिका ५ एताःवसुदेवानुजस्त्रियः
अथ अंधकपुत्रस्य भजमानस्यविदूरथः त· शूरः त· भजमानः त· शिनिः त· स्वयंभोजः त· हृदीकः त· पुत्राः ४ देवबाहुः १ शतधनुः २
कृतवर्मा ३ देवमीढ इति ४ देवमीढस्यशूरः त· मारिषायांपुत्राः १० त· वसुदेवः १ देवभागः २ देवश्रवाः ३ आनकः ४ सृंजयः ५ श्यामकः
६ कंकः ७ शमीकः ८ वत्सकः ९ वृकः इति वसुदेवजन्मनि आनकदुंदुभयोनेदुः अतः तं आनकदुंदुभिं हरेःस्यानंवदंति शूरस्यक
न्याः ५ पृथा १ श्रुतदेवा २ श्रुतकीर्तिः ३ श्रुतश्रवाः ४ राजाधिदेवी ५ शूरः अप्रजस्यकुंतेः पृथांददौ एकदागृहागतंदुर्वाससंपृथाप-
रिचर्यादिनातोषयामास तस्मात्सादेवाह्वानविद्यांआप विद्यापरीक्षार्थंरविं आजुहाव तदाप्राप्तंरविंदृष्ट्वाआह मयापरी-
क्षार्थंविद्यामयुक्ता हे देवयाहि क्षमस्व रविराह हे देवि मेदर्शनं व्यर्थं न त्वयिपुत्रंधत्से यथायोनिःनदुष्येत तथा एवंतस्यांग
र्भस्थाप्यगतः ततःसद्यःकुमारःजज्ञे सातंनदीतोये तत्याज तांपांडुःउवाह कारूषः वृद्धशर्माश्रुतदेवायांदंतवक्त्रंजनयामास
कैकयः धृष्टकेतुःश्रुतकीर्त्यांसंतर्दनादिपंचपुत्रान्प्रासूत जयसेनः राजाधिदेव्यांविंदानुविंदौअजनिष्ट चेदिराजः दमघोषःश्रु
तश्रवसि शिशुपालंजनयामास अथवसुदेवभ्रातृवंशमाह देवभागात् कंसायांचित्रकेतुबृहद्बलौ २ देवश्रवसः कंसवत्यां
सुवीरः इषुमान् २ आनकात् कंकायां सत्यजित् १ पुरुजित् २ संजयात् राष्ट्रपाल्यांवृषदुर्मर्षणादयः श्यामकात् शूरभूम्यांह
रिकेशहिरण्याक्षौ वत्सकात् मिश्रकेश्याम्प्सरसि वृकादयः वृकात् दुर्वाक्ष्यांअप्सरसि तक्षपुष्करशालादयः शमीकात् सुदामि
न्यां सुमित्रार्जुनपालादयः कंकात् कर्णिकायांऋतधामजयौ वसुदेवःरोहिण्यां बलंगदंसारणंदुर्मदंविमलंध्रुवं कृतादींश्चज-

नयामास वसुदेवस्यपौरव्यांसुभद्रः भद्रवाहः दुर्मदः भद्रः भूताद्याश्च द्वादशवसुदेवस्यमदिरायांनंदोपनंदकृतकशूराद्याःव
सुदेवात् भद्रायांकेशी वसुदेवस्यरोचनायांहस्तहेमांगदादयः तथाइलायांउरुवल्कादयः तथाधृतदेवायांविपृष्टः शांतिदेवा
यांश्रमप्रतिश्रुतादयः उपदेवायांदश कल्पवर्षाद्याः श्रीदेवायांवसुहंससुवंशाद्याःषट् देवरक्षितायांगदादयः नव सहदेवायांपु
रुविश्रुतादयः अष्ट देवक्यांपुत्राः अष्ट कीर्तिमान् सुषेणः भद्रसेनः ऋजुः संमर्दनः भद्रः संकर्षण इति अष्टमस्तुतयोरासीत्स्वयमे-
वहरिः किल सुभद्राकन्यातवपितामहीआसीत् यदाइहधर्मक्षयः पापवृद्धिःस्यात् तदाहरिःआत्मानंसृजते यद्यशःश्रवणेनज
नः कर्मवासनांधुनुते सहसंकर्षणः हरिः अपरिमेयकर्माणिचक्रे भक्तानुग्रहार्थंपुण्यंयशः व्यतनोत् हरिःस्वमूर्त्यानृलोकंरम
यामास तन्मुखंदृशिभिःपिबंत्यः नार्यः नराश्च नततृपुः कृष्णचरित्रंसमासेनवर्णयति आदौनिजरूपेणजातः पश्चात् मनु-
ष्याकारः सन् व्रजंगतः तत्रव्रजवासिनांमनोरथान् परिपूर्यरिपून् हत्वादारान्कृत्वातासुपुत्रशतानि उत्पाद्यजनेषु वेदमार्गंप्रथय
न् यज्ञैः आत्मानंईजे तथाकुरूणांअंतःसमुत्थकलिनापृथ्व्याःभरंक्षपयन् युधिष्ठिरस्याभूपचमूः विधूय अर्जुनेजयंउद्घोघो-
ष्य उद्धवायपरंतत्वंउपदिश्य स्वधामसमगात् ६७ इतिनवमस्कंधेचूर्णिकायांचतुर्विंशोऽध्यायः २४ ❦ ❦
श्रीकृष्णार्पणभवतु समाप्तोऽयंनवमस्कंधः ९ ❦ ❦ ❦ ❦ ❦ ❦

